॥ श्रीः ॥

हरिदास संस्कृत ग्रन्थमाला

२४३

# संस्कृत-गद्य-पद्य-संग्रहः

( प्रथमो भागः )

सम्पादकः—

श्रीबृहस्पतिशास्त्री



चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१

१९७६

प्रकाशक : चौखम्बा संस्कृत सीरीज आफिस, वाराणसी

मुद्रक : चौखम्बा प्रेस, वाराणसी

संस्करण : षष्ठ, वि० सं० २०३३

मूल्य : [illegible]





के० ३७/९९, गोपाल मन्दिर लेन

पो० बा० ८, वाराणसी–२२१००१ ( भारत )

फोन : ६३१४५

अपरं च प्राप्तिस्थानम्

चौखम्बा अमरभारती प्रकाशन

के० ३७/११८, गोपाल मन्दिर लेन

पो० बा० १३८, वाराणसी–२२१००१

( भारत )

THE
HARIDAS SANSKRIT GRANTHAMALA
243



# SANSKRIT-
# GADYA-PADYA-SAMGRAHA

( A Selection of Sanskrit Prose and Verses )

( PART I )

Edited By
**Shri Brihaspati Shastri**

THE
Chowkhamba Sanskrit Series Office
VARANASI-1
1976

# सम्पादकीयम्

साम्प्रतं संस्कृत-भाषायां मूल-संग्रहग्रन्थानां प्रायोऽभावमेवानुभवामि। नहि सर्वैः मूलसंस्कृतसाहित्यस्यागाधस्याऽध्ययनं साकल्येन कर्तुं पार्यते। न च तदध्ययनमन्तरा कालिदास-माघ-बाणादिकवीनां कलाभिः परिचयो भवितुमर्हति। संस्कृताध्ययनपरा अपि बहवश्छात्रा बृहदाकाराः कालिदास-माघ-बाणादि-कविकृतीः सम्यक् परिशीलयितुं नैव शक्नुवन्ति। अतो येन स्वल्पायासेन स्वल्पेन कालेन च सर्वेषामेव प्रसिद्धकवीनां तद्रचनानाञ्च बालः परिचयम्प्राप्नुयादिति बुद्धचा सम्पादितोऽयं संग्रहः छात्राणां संस्कृताध्येतॄणाञ्चोपकाराय कल्पिष्यत इत्याशासे।

अत्र हि संग्रहे प्रायशः सर्वेषामेव प्रसिद्धकवीनां प्रधानग्रन्थानां सुन्दराणि, मनोहराणि, सदुपदेशपराणि च स्थलानि संगृहीतानि। एतादृशं क्रमबद्धं सर्वेषामेव गद्यपद्ययोः ग्रन्थानां प्रतिनिधिस्वरूपं संस्कृत-संग्रह-पुस्तकं नैव प्रकाशितपूर्वमिति मन्ये। अन्यासु भाषासु एतादृशानां संग्रहग्रन्थानां नास्त्यभावः। किन्तु संस्कृते तु नैतादृशमेकमपि पुस्तकं दृष्टम्।

अत्र वेदेभ्य आरभ्य सर्वेषामेव प्रधानकवीनां प्रायः उदाहरणभूता अंशाः समुद्धृताः सन्ति। तत्रापि च कालक्रमेण कवीनां तद्रचनानाञ्च सङ्कलनं प्रधानं वैशिष्टचमेतस्य संग्रहस्य। अत्र पुस्तके भागद्वयं वर्तते—गद्यभागः पद्यभागश्चेति। उभयत्रापि कालानुसारं कवीनां क्रमो निर्धारितः येन सुगमतया छात्राः कवीनां पूर्वापरत्वं जानीयुः, संस्कृत-गद्य-पद्ययोः क्रमिकविकासस्य च ज्ञानं लभेरन्। अस्य संग्रहस्यावलोकनेन स्पष्टमेव शैलीवैलक्षण्यं विलोक्यते।

अत्रोद्धृतेषु सन्दर्भेषु प्रायः सन्धि-विच्छेदं विधायापि पदानि लिखितानि येन छात्राणां सौकर्यं भवेत् । बहुषु स्थलेषु मूलग्रन्थस्य वाक्यानां सरलेन वाक्येन विपरिणामोऽपि कृतः । यथावसरं यथास्थानं च परिवर्त्तनं परिवर्धनञ्च कृतं मूलग्रन्थेषु, सौविध्यदृष्ट्या । प्रायः सरला एव सन्दर्भाः अत्रोद्धृताः कठिनांशा अपि परिवर्त्तनेन सारल्यमापादिताः ।

आशासे यदयं संग्रहः संस्कृताध्येतॄणां छात्राणां सम्यगवबोधाय संस्कृत-साहित्यपरिचयाय च पर्याप्तो भविष्यति । प्रकाशने त्वराकारणात् क्वाचित्काः मुद्रण-भ्रमाः स्खलन-समाधान-शीलैः सद्भिर्विद्वद्भिः क्षन्तव्याः ।

विदुषां विधेयः —

**सम्पादकः**

# विषयसूची

## गद्यभागः



## पद्यभागः

संस्कृत-

# गद्यपद्य-संग्रहः

—:०:—

## गद्यभागः

### ईश-स्तुतिः

विश्वानि देव सवितर दुरितानि परासुव। यद्भद्रं तन्न आसुव ॥१॥ (वेदः)

भद्रं कर्णेभिः शृणुयाम देवाः, भद्रं पश्येमाक्षभिर्यजत्राः।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिः व्यशेमहि देवहितं यदायुः ॥२॥ (वेदः)

संगच्छध्वं संवदध्वं सं वो मनांसि जानताम्।
देवा भागं यथा पूर्वे संजानाना उपासते ॥ ३ ॥ (वेदः)

समानी व आकूतिः समाना हृदयानि वः।
समानमस्तु वो मनो यथा वः सुसहासति ॥ ४ ॥ (वेदः)

---

ईश–स्तुति

हे देव सविता ( सूर्य ) ! हमारे सभी पापों को दूर कीजिए और जितनी भी कल्याणकारक वस्तुएँ हों उन्हें हमारे लिए प्रदान कीजिए ॥ १ ॥

हे देवतागण ! हम लोग अपने कानों से कल्याण की बातें सुनें और यज्ञकर्म करते हुए आँखों से मंगल फल देखें, पुष्ट अंगों वाले शरीर से स्थित रहें तथा जो आयु देवताओं की है उसे हम लोग भी प्राप्त करें ॥ २ ॥

तुम लोग साथ-साथ चलो, एक साथ बोलो और अपने मन में एक ही समान विचार रखो, जैसे पहिले के ज्ञानी देवता लोग एक साथ मिलकर अपना-अपना भाग समानरूप से ग्रहण करते हैं ॥ ३ ॥

तुम्हारे संकल्प एक समान हों, तुम्हारे हृदय एक समान हों, तुम्हारे विचार एक समान हों, जिससे तुम लोगों की गति सहायता करने वाली हो ॥ ४ ॥

स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥५॥ (वेदः)
कल्याणानां निधानं कलिमलमथनं, पावनं पावनानां
पाथेयं यन्मुमुक्षोः सपदि परपदप्राप्तये प्रस्थितस्य ।
विश्रामस्थानमेकं कविवरवचसां जीवनं सज्जनानां
बीजं धर्मद्रुमस्य प्रभवतु, भवतां भूतये रामनाम ॥ ६ ॥
त्वमादिदेवः पुरुषः पुराणस्त्वमस्य विश्वस्य परं निधानम् ।
वेत्तासि वेद्यं च परं च धाम, त्वया ततं विश्वमनन्तरूप ॥ ७ ॥
पितासि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान् ।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभावः ॥ ८ ॥
त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च सखा त्वमेव ।
त्वमेव विद्या द्रविणं त्वमेव, त्वमेव सर्वं मम देव-देव ॥ ९ ॥

—:०:—

---

इन्द्र, वृद्धश्रवा, पूषा, विश्ववेदा, तार्क्ष्य, अरिष्टनेमी और बृहस्पति हम लोगों को कल्याण प्रदान करें ॥ ५ ॥

कल्याण का खजाना, कलि के पापों को नष्ट करने वाला, पवित्रों को भी पवित्र करने वाला, शीघ्र ही परमपद की प्राप्ति के लिए प्रस्थान किए हुए मोक्ष के इच्छुक का साधन (पाथेय=यात्रा में साथ ली हुई भोजन सामग्री), कवियों की वाणी का एक मात्र विश्राम-स्थान, सज्जनों का जीवन, धर्मरूपी वृक्ष का बीज रामनाम आप लोगों का कल्याण करने वाला हो ॥ ६ ॥

हे अनन्तरूप भगवन् ! तुम्ही आदि देव हो, प्राचीन पुरुष हो, इस विश्व की महान् निधि हो, तुम्हीं सब कुछ जानने वाले और जानने योग्य भी हो, तुम्हीं सबसे महान् तेज हो और हे प्रभु ! तुम्हीं इस जगत् में समाये हुए हो ॥ ७ ॥

हे अनूपमेय प्रभाव वाले प्रभु, तुम इस चर-अचर समस्त संसार के जन्म देने वाले और पालन करने वाले हो, तुम्हीं इस संसार के पूज्य हो, तुम्हीं सबसे महान् गुरु हो । इन तीनों लोकों में तुम्हारे समान ही कोई नहीं है फिर तुमसे अधिक दूसरा कोई होगा ही कहाँ से ॥ ८ ॥

हे प्रभु ! तुम्हीं मेरे माता पिता हो, तुम्हीं मेरे भाई और मित्र हो, तुम्हीं मेरी विद्या हो, तुम्हीं मेरे धन हो, हे देवों से भी पूज्य ! तुम्ही मेरे लिए सब कुछ हो ॥

# हरिश्चन्द्रोपाख्यानम्

## ( ऐतरेयब्राह्मणतः )

[ संस्कृतसाहित्ये वेदेभ्यः पश्चात् ब्राह्मणानि जातानि । अत एव प्राचीनतमं गद्यस्वरूपं ब्राह्मणेष्वेवोपलभ्यते । तत्रापि ऐतरेयब्राह्मणस्य प्राथम्यात् तत एवेयं कण्डिका समुद्धृता । ]

हरिश्चन्द्रो ह वैधस ऐक्ष्वाको राजा अपुत्र आस । तस्य ह शतं जाया बभूवुः । तासु पुत्रं न लेभे । तस्य ह पर्वतनारदौ गृहे ऊषतुः । स ह नारदं पप्रच्छ ।

'यं न्विमं पुत्रमिच्छन्ति ये विजानन्ति ये च न ।
किंस्वित्पुत्रेण विन्दते तन्म आचक्ष्व नारद ॥' इति ॥

एकया पृष्टः दशभिः प्रत्युवाच—

'ऋणमस्मिन् संनयत्यमृतत्वं च गच्छति ।
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ॥ १ ॥
यावन्तः पृथिव्यां भोगाः यावन्तो जातवेदसि ।
यावन्तो अप्सु प्राणिनां भूयान् पुत्रे पितुस्ततः ॥ २ ॥

---

हरिश्चन्द्रोपाख्यान

इक्ष्वाकुवंशीय वेधस नाम के राजा के पुत्र राजा हरिश्चन्द्र को कोई पुत्र नहीं था । उसकी सौ स्त्रियां थीं किन्तु उनमें से किसी से पुत्र की प्राति नहीं हुई । उसके घर पर्वत और नारद नाम के ऋषि रहते थे । उसने नारद से पूछा—

इस संसार में जितने जानने वाले हैं ( अर्थात् मनुष्य हैं ) और जितनी नहीं जानने वाले हैं ( अर्थात् पशु आदि हैं ) वे सभी पुत्र की अभिलाषा रखते हैं । पिता उस पुत्र से क्या पाता है ? हे नारदजी, इसे मुझे बताइए ।

एक गाथा से पूछे जाने पर नारद ने दस गाथाओं में उत्तर दिया—

यदि पिता जीवित उत्पन्न पुत्र का मुख देख ले तो वह अपने समस्त ऋण (देवऋण, ऋषि ऋण और पितृऋण) को उसके कंधों पर डाल देता ( अर्थात् पुत्र द्वारा ऋणमुक्त हो जाता है ) और अमरता को प्राप्त कर लेता है ॥ १ ॥

पृथ्वी में जितने प्रकार के भोग हैं, अग्नि में जितने भोग हैं और जल में जितने भोग हैं, पिता के लिए उन सभी भोगों से श्रेष्ठ भोग पुत्र में हैं ( अर्थात् पृथ्वी, जल, अग्नि आदि तत्त्वों से जो भी सुख-दुःख प्राप्त होते हैं उनसे भी महान् सुख-दुःख पिता को पुत्र में मिलते हैं ) ॥ २ ॥

शश्वत् पुत्रेण पितरोऽत्यायन् वहुलं तमः।
आत्मा हि जज्ञे आत्मनः स इरावत्यतितारणी ॥ ३ ॥
किन्नु मलं किमजिनं किमु श्मश्रूणि किं तपः।
पुत्रं ब्राह्मण इच्छध्वं स वै लोको वदावदः ॥ ४ ॥
अन्नं ह प्राणः शरणं ह वासो रूपं हिरण्यं पशवो विवाहाः।
सखा ह जाया कृपणं ह दुहिता ज्योतिह पुत्रः परमे व्योमन् ॥ ५ ॥
नापुत्रस्य लोकोऽस्तीति तत्सर्वे पशवो विदुः।
एष पन्थाः उरुगायः सुशेवो यं पुत्रिण आक्रमन्ते विशोकाः ॥
तं पश्यन्ति पशवो वयांसि च' ॥ ६ ॥

---

पुत्र के उत्पन्न होने से पितर लोग बहुत से कष्टों को पार कर जाते हैं ( अर्थात् बहुत से संकटों से मुक्त हो जाते हैं ), पिता अपनी ही आत्मा को ( पुत्ररूप में ) जन्म देता है। वह पुत्र इरावती ( अन्नयुक्त नदी ) को तारने की नौका है ( अर्थात् जैसे नाव नदी को पार कर देती है वैसे ही पुत्र पिता के कष्टों को पार कर देता है ) ॥५॥

चाहे गृहस्थाश्रम हो ( मल ), चाहे ब्रह्मचर्य हो (अजिन), चाहे वानप्रस्थ हो ( श्मश्रूणि ), चाहे संन्यास हो ( तपः ) किन्तु इन सभी आश्रमों का सुख इस पुत्रसुख के आगे तुच्छ है। अतः हे ब्राह्मण-क्षत्रिय-वैश्य ! तुम सभी भोग पुत्र की कामना करो। संसार में पुत्र अनिन्दनीय होता है ॥ ४ ॥

अन्न प्राण है ( अर्थात् अन्न से प्राणों की रक्षा होती है), वस्त्र रक्षक है (शीतादि से वचाने वाला है), सोना रूप है (अर्थात् सौन्दर्य को बढ़ाने वाला है), पशु विवाह है (पशु विवाह का साधन होने के कारण विवाहतुल्य ही है), पत्नी अन्तरङ्ग मित्र है ( अर्थात् इन सभी से हर समय नहीं, अवसरविशेष पर ही सुख मिलता है ) पुत्री दीनता का करण होती है, किन्तु पुत्र वह प्रकाश होता है जिससे पिता परब्रह्म को प्राप्त कर लेता है ॥ ५ ॥

पुत्रहीन के लिए संसार नहीं है ( अर्थात् पुत्रहीन इस संसार में सुख पा ही नहीं सकता ), इसे पशु भी समझते हैं। इस पुत्रप्राप्ति से होने वाले सुख रूपी मार्ग का सेवन बड़े-बड़े कीर्तिमान लोगों ने भी किया है। जिस पुत्रप्राप्ति के सुख मार्ग को शोकरहित हो कर पुत्रों वाले लोग पार करते हैं, ( पुत्र वाले पिता को जो सुख मिलता है ) उसे पशु-पक्षी भी जानते हैं ॥ ३ ॥

अथैनमुवाच—वरुणं राजानमुपधाव, पुत्रो मे जायताम् ,तेन त्वा यजा इति।' तथेति। स वरुणं राजानमुपसार, पुत्रो मे जायताम्। तेन त्वा यजा इति। तथेति। तस्य पुत्रो जज्ञे, रोहितो नाम।

तं होवाचाजनिवै ते पुत्रो यजस्व माममनेनेति। स च होवाच—' यदा वै पशुः निर्दशो भवति अथ स मेध्यो भवति। निर्दशो नु अस्तु। अथ। त्वा यजा इति।' तथेति।

स ह निर्दश आस। तं होवाच' —'निर्दशोऽन्वभूत्। यजस्व मा अनेनेति।' स होवाच—' यदा वै पशोर्दन्ता जायन्तेऽथ स मेध्यो भवति। दन्ता न्वस्य जायन्तामथ त्वा यजा इति।' तथेति।

तस्य ह दन्ता जज्ञिरे। तं होवाच —' अज्ञत वाऽस्य दन्ताः। यजस्व मा अनेनेति।' स होवाच—' यदा वै पशोर्दन्ताः पद्यन्ते अथ स मेध्यो भवति। दन्ता न्वस्य पद्यन्तामथ त्वा यजा इति।' तथेति।

---

इसके बाद नारद ने उनसे (हरिश्चन्द्र से) कहा—हे राजन्! वरुण की प्रार्थना करो कि मेरे लड़का पैदा हो। उससे मैं आपके लिए यज्ञ करूँगा। अच्छा, ऐसा ही करूँगा। इसके पश्चात् हरिश्चन्द्र ने राजा वरुण की प्रार्थना की कि मेरे लड़का पैदा हो। उससे मैं तुम्हारे लिए यज्ञ करूँगा (वरुण ने कहा) ऐसा ही हो (जिससे) राजा हरिश्चन्द्र को रोहित नाम का लड़का पैदा हुआ।

वरुण ने उससे (हरिश्चन्द्र से) कहा—तुम्हें पुत्र हो गया, अब उससे मेरा यज्ञ करो। उसने कहा—जब पशु दश दिन का हो जाता है तब वह पपित्र (यज्ञ के योग्य) होता है। जब वह दश दिन का हो जायगा तब इससे यज्ञ करूँगा। वरुण ने कहा—ऐसा ही करो।

वह दश दिन का हो गया (तब) वरुण ने उससे (हरिश्चन्द्र से) कहा—यह दश दिन का हो गया। इससे मेरा यज्ञ करो। उसने (हरिश्चन्द्र ने) कहा—जब पशु के दाँत निकल आते हैं तब यह यज्ञ के योग्य होता है। जब इसके दाँत आ जायेंगे तो तुम्हारा यज्ञ करूँगा।

उसे दाँत निकल आए। तब उसने (बरुण ने) कहा—इनके दाँत पैदा हो गए। इससे मेरा यज्ञ करो। उसने (हरिश्चन्द्र ने) कहा—जब पशु के दूध के दाँत गिर जाते हैं तब वह यज्ञ के योग्य होता है। जब इसके दाँत गिर जायेंगे तब तुम्हारा यज्ञ करूँगा। वरुण ने कहा—ऐसा ही करो।

तस्य ह दन्ताः पेदिरे। तं होवाच—'अपत्स्यन्त वा अस्य दन्ताः। यजस्व मा अनेनेति।' स होवाच—'यदा वै पशोर्दन्ता पुनर्जायन्ते, अथ स मेध्यो भवति। दन्ता न्वस्य पुनर्जायन्तामथ त्वा यजा इति।' तथेति।

तस्य ह दन्ताः पुनर्जज्ञिरे। तं होवाच—'अज्ञत वाऽस्य पुनर्दन्ताः। यजस्व मा अनेनेति।' स होवाच—'यदा वै क्षत्रियः सान्नाहुको भवति, अथ स मेध्यो भवति। सन्नाहं तु प्राप्नोतु अथ त्वा यजा इति।' तथेति।

स ह सन्नाहं प्रापत्तं होवाच—'सन्नाहं तु प्राप्नोत्, यजस्व मा अनेनेति।' स तथेत्युक्त्वा पुत्रमामन्त्रयामास। ततायं वै मह्य त्वामददात्। हन्त त्वया ह मित्रं यजा इति। स ह नेत्युक्त्वा धनुरादायारण्यमुपतस्थौ। संवत्सरमरण्ये चचार।

अथ हैक्ष्वाकं वरुणो जग्राह। तस्य होदरं जज्ञे। तदु हि रोहितः शुश्राव। सोऽरण्याद् ग्रामयेयाय। तमिन्द्रः पुरुषरूपेण पर्येत्योवाच—

---

उसके दाँत टूट गए। वरुण ने उससे कहा इसके दाँत गिर गए। इससे मेरा यज्ञ करो। उसने (हरिश्चन्द्र ने) कहा—जब पशु को फिर से दाँत निकल आते हैं तब वह यज्ञ के योग्य होता है। जब इसके फिर दाँत निकल आयेंगे तो मैं इससे तुम्हारा यज्ञ करूँगा। वरुण ने कहा—ऐसा ही करो।

उसको फिर दाँत निकल आए। वरुण ने हरिश्चन्द्र से कहा—इसे फिर दाँत निकल आए। इससे मेरा यज्ञ करो। हरिश्चन्द्र ने कहा—जब क्षत्रिय शस्त्रधारी हो जाता है तब वह यज्ञ के योग्य होता है। जब वह शस्त्रधारी हो जायगा तब तुम्हारा यज्ञ करूँगा। वरुण ने कहा—ऐसा ही करो।

वह शस्त्रधारी बन गया। वरुण ने हरिश्चन्द्र से कहा--अब यह शस्त्रधारी बन गया है। इससे मेरा यज्ञ करो। हरिश्चन्द्र ने 'ऐसा ही करूंगा' ऐसा कह कर पुत्र को बुलाया। हरिश्चन्द्र ने कहा—पुत्र! वरुण ने तुम्हें मुझे दिया है। मैं तुमसे इनका यज्ञ करूंगा। रोहित पिता की बात न मान कर धनुष लेकर जंगल में चला गया। वह एक साल तक जंगल में घूमता रहा।

इक्ष्वाकुवंशीय राजा हरिश्चन्द्र को वरुण ने ( रोग रूप से ) पकड़ लिया। उसे जलोदर हो गया। रोहित ने इसे ( राजा के रोग को ) सुना। वह जंगल से गाँव की ओर लौट पड़ा। ( मार्ग में ) इन्द्र ने पुरुष का रूप धारण करके उससे कहा—

'नानाश्रान्ताय श्रीरस्तीति रोहित शुश्रुत, पापो नृषद्वर जन इन्द्र इच्चरतः सखा चरैवेति। द्वितीयं संवत्सरमरण्ये चचार सः। तृतीयं संवत्सरमरण्ये चचार। चतुर्थं संवत्सरमरण्ये चचार पञ्चमं संवत्सरमरण्ये चचार। षष्ठं संवत्सरमरण्ये चचार। सोऽजीगर्तं सौयवसिमृषिमशनया परीतमरण्य उपेयाय। तस्य ह त्रयः पुत्राः आसुः। शुनःपुच्छः, शुनःशेपः, शुनो लांगूल इति। तं होवाच—'ऋषेऽहं ते शतं ददामि। अहमेषामेकेनात्मानं निष्क्रीणा इति।' स ज्येष्ठं पुत्रं निगृह्णान उवाच, न त्वमुमिति, नो एव इममिति, कनिष्ठं माता तौ ह मध्यमे सम्पादयाञ्चक्रतुः, शुनःशेपे। तस्य ह शतं दत्त्वा तमादाय सः अरण्यात् ग्राममेयाय।

स पितरमेत्योवाच, तात, हन्त, अहमनेन आत्मानं निष्क्रीणा इति। स वरुणं राजानमुपससार, अनेन त्वा यजा इति। तथेति। भूयान् वै ब्राह्मणः क्षत्रियात् इति वरुण उवाच। तस्मै एतं राजसूयं यज्ञ-क्रतुं प्रोवाच तमेतम् अभिषेचनीये पुरुषं पशुमालेभे।

तस्य विश्वामित्रो होता आसीत्। जमदग्निः अध्वर्युः। वशिष्ठो

---

हे रोहित ! परिश्रम न करने वाले पुरुष को सम्पत्ति नहीं मिलती है—ऐसा मैंने सुना है। श्रेष्ठ पुरुष भी अपने परिवार वालों में ही सर्वदा रहने से तुच्छ हो जाता है। भ्रमण करने वाले का मित्र इन्द्र बनता है अतः तुम-भ्रमण करो। वह दूसरे वर्ष भी जंगल में घूमता रहा, तीसरे वर्ष भी जंगल में घूमता रहा, चौथे वर्ष भी जंगल में घूमता रहा, पाँचवें वर्ष भी जंगल में घूमता रहा, छठे वर्ष भी जंगल में घूमता रहा। इसके पश्चात् भूख से दुःखी सुवयस् ऋषि के पुत्र अजीगर्त के पास वह पहुंचा। उसके शुनःपुच्छ, शुनःशेप और शुनोलांगूल नाम के तीन पुत्र थे। रोहित ने अजीगर्त से कहा—हे ऋषि ! मैं तुम्हें सौ गाएँ दूँगा। मैं इनमें से एक लड़के ( अपने को वरुण से मुक्त करने के लिए ) लेना चाहता हूं। उसने जेठे लड़के को पकड़ कर कहा—मैं इसे नहीं दे सकता। छोटे को माता ने पकड़ लिया। अन्त में माता पिता दोनों ने बिचले लड़के शुनःशेप को देना स्वीकार कर लिया। रोहित अजीगर्त को सौ गाएँ देकर शुनःशेप को लेकर जंगल से गाँव को लौट पड़ा।

रोहित ने पिता के पास पहुंच कर कहा—तात ! हर्ष की बात है कि मैं इसके

ब्रह्मा । अयास्यः उद्गाता । तस्मै उपाकृताय नियोक्तारं न विविदुः स ह उवाच अजीगर्तः सौयवसिः—'मह्यमपरं शतं दत्त, अहमनेन नियोक्ष्यामीति' तस्मै अपरं शतं ददुः । सः असिं निःशान एयाय ।

अथ ह शुनःशेपः ईक्षाञ्चक्रे । अमानुषमिव वै मा विशसिष्यन्ति हन्त, अहं देवता उपधावामीति ।

तस्य ह ऋचि ऋचि उक्तायां विपाशो मुमुचे । कनीय ऐक्ष्वाकस्य उदरं भवति । उत्तमस्यामेव ऋचि उक्तायां विपाशो मुमुचे, अगद ऐक्ष्वाक आस ।

## अश्वमेधशब्दार्थः

( इयं कंडिका शतपथब्राह्मणात् गृहीता । ऐतरेयब्राह्मणादर्वाचीनत्वमस्य ब्राह्मणस्य प्रतीयते । अश्वमेधशब्दस्य कौ हि वास्तविकोऽर्थः किञ्च तात्पर्यमिति स्पष्टीकृतमत्र । ]

अपि ह वा एतर्हि देवेभ्योऽश्वमेधमालभन्ते, तदाहुः प्राकृतः अश्वमेध-

---

द्वारा (शुनःशेप द्वारा ) अपने को वरुण से मुक्त कर लूँगा । हरिश्चन्द्र ने वरुण के पास जाकर कहा—मैं इससे ( शुनःशेप से ) आप का यज्ञ करूँगा । वरुण ने कहा—ऐसा ही करो । इस क्षत्रिय से ( रोहित से ) यह ब्राह्मण (शुनःशेप) मुझे अधिक प्रिय है । वरुण ने इससे राजसूय यज्ञ करने को कहा । हरिश्चन्द्र ने उस पुरुष को (शुनःशेप को) यज्ञ में पशु रूप से हवन करने का निश्चय किया ।

उसके यज्ञ में विश्वामित्र होता, जमदग्नि अध्वर्यु, वशिष्ठ ब्रह्मा और अयास्य उद्गाता हुए । उपकरण संस्कार से शुद्ध उस शुनःशेप के लिए कोई नियोक्ता ( यज्ञस्तम्भ में बाँधने वाला ) नहीं मिला । तब सुयवस् के पुत्र अधीगर्त ने कहा—मुझे और सौ गाएँ दो तो मैं ही इसे स्तम्भ में बाँध दूँगा । उसे सौ गाएँ दी गई । वह तलवार को तेज करता हुआ उसके पास पहुँचा ।

इसके पश्चात् शुनःशेप ने विचार किया । ये सब मुझे पशु की तरह मार डालेंगे । अतः इससे छुटकारा पाने के लिए मैं देवताओं की शरण में चलूँ ।

उसके एक-एक मन्त्र के उच्चारण पर उसके बन्धन टूटने लगे । इच्छाकुवंशी राजा हरिश्चन्द्र का जलोदर कम हो गया । अंतिम मन्त्र पढ़ने पर वह बंधन से बिल्कुल मुक्त हो गया और राजा हरिश्चन्द्र भली-भाँति नीरोग हो गए ।

### अश्वमेधशब्दार्थ

इस ( दर्शपूर्णमास के ) समय ( इसके याज्ञिक ) देवताओं के लिए अश्वा-

इति । इतरभित् नूनं सा तद्धा एष एव अश्वमेधः यच्चन्द्रमाः । तदाहुः पदे पदे अश्वस्य मेध्यस्य आहुतिं जुह्वतीति । स यत् सायं प्रातः अग्निहोत्रं जुहोति, द्वे सायमाहुती जुहोति, द्वे प्रातः, ताः चतस्रः आहुतयः, चतुष्पाद् वा अश्वः, तस्य पदे पदे एव आहुतिः हुता भवति । तद् आहुः विवृत्तो अश्वस्य इष्टिं निर्वपति इति, एष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः स यत्र एष एताः रात्रिं न पुरस्तान्न पश्चात् ददृशे तद् इमं लोकम् आगच्छति, स अस्मिन् लोके निवर्तते । स यदमावास्येन यजते, विवृत्त एव अस्य एतदिष्टिं निर्वपति, अथ यत् पौर्णमासेन यजते अश्वमेधमेवैतत् आलभते, तमालभ्य देवेभ्यः प्रयच्छति । संवत्सरे वा इतरमश्वमेधमालभन्ते, एष वै मासः परिप्लवमानः संवत्सरं करोति ।

तद् अस्य संत्वश्रे संवत्सरः एव अश्वमेधः आलब्धो भवति । तं वा एतं मासि-मासि एव अश्वमेधमालभन्ते । स यो ह एवं विद्वान् अग्नि-

---

त्मक मेध का आलम्भन करते हैं । इसलिए इसके विषय में कहा है कि यही (दर्शपूर्णमास याग) प्रकृतभूत अश्वमेध है । अतः इसका ( दर्शपूर्णमास काल के विभाग का हेतु ) चन्द्रमा ही अश्वमेध है । अश्वमेध के प्रत्येक पैर पर आहुति दी जाती है । इस समय भी सायं प्रातःकाल अग्निहोत्र किया जाता है, दो आहुतियां सायंकाल दी जाती हैं, दो आहुतियां प्रातःकाल दी जाती हैं । ये चारों आहुतियाँ मानो चार पैर वाला अश्व हैं । इसीलिए इसके एक-एक पद पर आहुति होती है । यह भी कहा जाता है कि अश्व के स्थानान्तरित हो जाने पर ( उसकी पुनः प्राप्ति के लिए ) कुछ इष्ट क्रियायें की जाती हैं । तो वह देवताओं का अन्न सोम राजा जो चन्द्रमा है वह जिस दिन रात्रि को न पूर्वमें दिखाई पड़ता है न पश्चिम में, उस समय वह इस लोक में आता है । इस प्रकार उसका इस लोक में स्थानान्तर हो जाता है । अतः जो अमावास्य द्वारा यज्ञ किया जाता है वह इसकी इष्टि होती है ( अर्थात् इसे पुनः प्राप्त करने की क्रिया होती है ) और जो पौर्णमास द्वारा किया जाता है उससे अश्वरूपात्मक पूर्ण मेघ की प्राप्ति होती है। उसे प्राप्त करके देवताओं को प्रदान करते हैं । इस अश्वरूपात्मक मेध की प्राप्ति एक संवत्सर में होती है तो यहाँ (चन्द्र पक्ष में) यह मास ही क्रमानुसार संवत्सर बन जाता है।

इसलिए प्रत्येक संवत्सर में अश्वमेध प्राप्त होता है । यहां (अर्थात् चन्द्रपक्ष में)

होत्रं जुहोति, दर्शपूर्णमासाभ्यां च यजते मासि-मासि ह एव अस्य अश्व-मेधेन इष्टं भवति। एतद् ह अस्य अग्निहोत्रं च दर्शपूर्णमासौ च अश्वमे-धमभिसम्पद्यते।

---

## अमृतत्वप्राप्तिः

(अयं गद्यभागः मैत्रेयी-याज्ञवल्क्य-संवादरूपः बृहदारण्यकोपनिषदः उद्धृतः। अस्याः उपनिषदः प्राधान्यं प्रख्यातम्। याज्ञवल्क्यस्य पत्नी मैत्रेयी याज्ञवल्क्यं पृच्छति यत्, किं धनेन अमृतत्वप्राप्तिः संभवति न वा। याज्ञवल्क्यः तां सम्यक् उपदिशति।)

अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुः। मैत्रेयी च कात्यायनी च। तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव, स्त्रीप्रज्ञैव तर्हि कात्यायनी। अथ ह याज्ञवल्क्यः अन्यत् वृत्तमुपाकरिष्यन्–'मैत्रेयीति' ह उवाच याज्ञवल्क्यः– 'प्रव्रजिष्यन् वा अरे अहमस्मात् स्थानादस्मि। हन्त ते अनया कात्या-यन्या अन्तं करवाणि इति।' सा ह उवाच मैत्रेयी—'यन्नु मे इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्, स्यां नु अहं तेन अमृता आहो नेति?' 'नेति'—ह उवाच याज्ञवल्क्यः—'यथैव उपकरणवतां जीवितं तथैव ते

---

महीने-महीने अश्वरूपात्मक मेघ प्राप्त होता है। अतः दर्शपूर्णमास द्वारा जो अग्निहोत्र किया जाता है और महीने-महीने जो यज्ञ होता है उसे अश्वमेघ ही समझना चाहिए। इस प्रकार दर्शपूर्णमास का अग्निहोत्र ही अश्वमेघ है, ऐसा सिद्ध हो जाता है।

---

### अमृतत्वप्राप्ति

याज्ञवल्क्य की दो स्त्रियां थीं। एक मैत्रेयी और दूसरी कात्यायनी। उन दोनों में मैत्रेयी ब्रह्मज्ञान वाली थी किन्तु कात्यायनी साधारण स्त्री बुद्धिवाली थी। एक बार याज्ञवल्क्य ने अन्य आश्रम में जाने की इच्छा करते हुए मैत्रेयी से कहा—मैं इस स्थान से ( गृहस्थाश्रम से ) जाना चाहता हूं। मैं अब तुम्हारे और कात्यायनी दोनों के साथ अपने संबंध का अंत कर रहा हूं। मैत्रेयी ने उससे कहा—भगवान्! यदि धनपूर्ण यह सभी पृथ्वी मेरी हो जाय तो मैं उससे अमर हो सकती हूँ अथवा नहीं? याज्ञवल्क्य ने कहा—नहीं। जैसे धन धान्यपूर्ण लोगों का

जीवितं स्यात्, अमृतत्वस्य तु न आशा अस्ति वित्तेनेति।' सा ह उवाच मैत्रेयी—'येन अहं न अमृता स्यां किमहं तेन कुर्याम्? यदेव भगवान् वेद, तदेव मे ब्रूहि इति।' स ह उवाच याज्ञवल्क्यः—'प्रिया वै खलु नो भवती सती प्रियमवृच्छत्। हन्त तर्हि भवति एतद् व्याख्यास्यामि, व्याचक्षाणस्य तु मे निदिध्यासस्व इति।'

स ह उवाच—'न वा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पतिः प्रियो भवति। ना वा अरे जायायै कामाय जाया प्रिया भवति, आत्मनस्तु कामाय जाया प्रिया भवति। न वा अरे पुत्राणां कामाय पुत्राः प्रियाः भवन्ति, आत्मनस्तु कामाय पुत्राः प्रियाः भवन्ति। न वा अरे वित्तस्य कामाय वित्तं प्रियं भवति, आत्मनस्तु कामाय वित्तं प्रियं भवति। न वा अरे पशूनां कामाय पशवः प्रियाः भवन्ति, आत्मनस्तु कामाय पशवः प्रियाः भवन्ति। न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवति, आत्मनस्तु कामाय ब्रह्म प्रियं भवति। न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवति, आत्मनस्तु कामाय क्षत्रं प्रियं भवति। न वा अरे लोकानां कामाय लोकाः प्रियाः भवन्ति, आत्मनस्तु कामाय लोकाः प्रियाः भवन्ति। न वा अरे देवानां कामाय देवाः प्रियाः भवन्ति, आत्मनस्तु

---

जीवन होता है उसी प्रकार का तुम्हारा भी जीवन होगा। धन से अमरता मिलने की कोई आशा नहीं है। मैत्रेयी ने कहा—जिससे (जिस धन से) मैं अमर नहीं हो सकती उसे लेकर क्या करूँगी। आप जो जानते हों (अर्थात् जिससे अमरता मिलती हो) उसे मुझे बताइए। याज्ञवल्क्य ने कहा—तुम मेरी बहुत प्रिया हो और प्रिय बात पूछ भी रही हो। मैं तुम्हारे लिए यह व्याख्यान कर रहा हूं। परन्तु व्याख्यान करते हुए मेरी बातों पर चिन्तन करो।

याज्ञवल्क्य ने कहा—मैत्रेयी! पति की कामना के लिए (स्त्री को) पति प्रिय नहीं होता, बल्कि अपनी आत्मा की कामना के लिए पति प्रिय होता है। स्त्री की कामना के लिए (पति को) स्त्री प्रिय नहीं होती, बल्कि अपनी आत्मा की कामना के लिए स्त्री प्रिय होती है। पुत्रों की कामना के लिए पुत्र प्रिय नहीं होते, बल्कि अपनी आत्मा की कामना के लिए पुत्र प्रिय होते हैं। धन की कामना के लिए धन नहीं प्रिय होता, बल्कि अपनी आत्मा की कामना के लिए धन प्रिय होता है। पशुओं की कामना के लिए पशु प्रिय नहीं होते, बल्कि अपनी आत्मा की

कामाय देवाः प्रियाः भवन्ति। न वा अरे वेदानां कामाय वेदाः प्रियाः भवन्ति, आत्मनस्तु कामाय वेदाः प्रिया भवन्ति। न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्ति, आत्मनस्तु कामाय भूतानि प्रियाणि भवन्ति। न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति, आत्मनस्तु कामाय सर्वं प्रियं भवति।

आत्मा वा अरे द्रष्टव्यः, श्रोतव्यो, मन्तव्यो, निदिध्यासितव्यः, मैत्रेयि, आत्मनि खलु अरे दृष्टे, श्रुते, मते, विज्ञाते इदं सर्वं विदितम्।'

---

## नाम्नामाख्यातजत्वम्

(यास्कः)

(ई० पू०—७००)

[ यास्कस्य निरुक्तं गद्येनैव निर्मितमस्ति। इदमपि प्राचीनतमस्य गद्यस्योदाहरणरूपम्। अतः ततोऽपि कियानंश उद्ध्रियते। अत्र सर्वाणि नामानि आख्यातजानि, यौगिकानि, धातुप्रत्ययसंयोगेन निष्पन्नानीति निश्चीयते। ]

सर्वाणि नामानि आख्यातजानि इति शाकटायनो नैरुक्तसमयश्च।

---

कामना के लिए पशु प्रिय होते हैं। ब्राह्मण की कामना के लिए ब्राह्मण प्रिय नहीं होता, बल्कि अपनी आत्मा की कामना के लिए ब्राह्मण प्रिय होता है। क्षत्रिय की कामना के लिए क्षत्रिय प्रिय नहीं होता, बल्कि अपनी आत्मा की कामना के लिए क्षत्रिय प्रिय होता है। लोक की कामना के लिए लोक प्रिय नहीं होते, बल्कि अपनी आत्मा की कामना के लिए लोक प्रिय होते हैं। देवताओं की कामना के लिए देवता नहीं प्रिय होते, बल्कि आत्मकामना के लिए देवता प्रिय होते हैं। वेदों की कामना के लिए वेद नहीं प्रिय होते, बल्कि आत्मकामना के लिए वेद प्रिय होते हैं। प्राणियों की कामना के लिए प्राणी प्रिय नहीं होते, बल्कि आत्मकामना के लिए प्राणी प्रिय होते हैं। सबकी कामना के लिए सब प्रिय नहीं होते, बल्कि आत्मकामना के लिए सब प्रिय होते हैं।

इसलिए हे मैत्रेयी! यह आत्मा ही देखने योग्य, सुनने योग्य, मानने योग्य और चिंतन करने योग्य है। इस आत्मा के देख लेने पर, सुन लेने पर, मान लेने पर और जान लेने पर यह सभी मालूम हो जाता है।

संज्ञा का धातु से उत्पन्न होना

सभी नाम (संज्ञाएँ) आख्यात (धातु) से उत्पन्न हुए हैं ऐसा शाकटायन

न सर्वाणीति गार्ग्यो वैयाकरणानां चैके। तत् यत्र स्वर-संस्कारौ समर्थौ प्रादेशिकेन गुणेन अन्वितौ स्यातां संविज्ञातानि तानि। यथा—गौः, अश्वः, पुरुषः, हस्तीति। अथ चेत् सर्वाणि आख्यातजानि नामानि स्युः यः कश्च तत्कर्म कुर्यात् सर्वं तत् सत्त्वं तथा आचक्षीरन्। यः कश्च अध्वानमश्नुवीत, अश्वः स वचनीयः स्यात्। यत् किंचित् तृन्द्यात्, तृणं तत्। अथापि चेत् सर्वाणि आख्यातजानि नामानि स्युः यावद्भिः भावैः सम्प्रयुज्यते तावद्भ्यः नामधेयप्रतिलम्भः स्यात्। तत्रैवं स्थूणा, दरशया, वा सञ्जनी च स्यात्। अथापि य एषां न्यायवान् कार्मनामिकः संस्कारः यथा चापि प्रतीतार्थानि स्युः तथैतानि आचक्षीरन् पुरुषं पुरिशय इत्याचक्षीरन् अष्टा इति अश्वं, तर्दनमिति तृणम्।

अथापि निष्पन्ने अभिव्याहारे अभिविचारयन्ति प्रथनात् पृथिवी इत्याहुः। कः एनाम् अप्रथयिष्यत्, किम् आधारश्चेति। अथ अनन्विते

---

भी कहते हैं और निरुक्तकारों में भी कुछ लोग ऐसा मानते हैं। किन्तु गार्ग्य और वैयाकरणों में से कुछ लोग कहते हैं कि सभी नाम आख्यात से उत्पन्न नहीं हैं। इसलिए जहाँ स्वर (उदात्त आदि) और संस्कार (प्रकृति और प्रत्यय) ठीक-ठीक बन सकते हों और प्रादेशिक गुणों से युक्त हों वहाँ उन्हें ही आख्यात से उत्पन्न समझना चाहिए न कि सभी को। जैसे गौ, अश्व, पुरुष, हस्ती आदि। अगर सभी नाम आख्यात से उत्पन्न होने वाले हों तो जो कोई भी उस कर्म को करेगा उस भी प्राणी को उसी नाम से कहा जायगा। जो कोई मार्ग को व्याप्त करेगा वह अश्व कहा जायगा। जो कोई भी तोड़ा जायगा वह तृण कहा जायगा। इसके अतिरिक्त यदि सभी नामों को आख्यात से उत्पन्न मान लिया जायगा तो जिस वस्तु का सम्बन्ध जितनी क्रियाओं से होगा उसे उतने नामों का लाभ होगा (अर्थात् उन क्रियाओं के अनुसार उसके उतने नाम होंगे)। ऐसा होने पर स्थूणा (खंभ) को 'दरशया' (गड्ढे में होने वाला) अथवा 'सञ्जनी' (जिस पर छत टिका हो) नाम का भी लाभ होगा अर्थात् उसे दरशया और सञ्जनी भी कहा जायगा। इसके अतिरिक्ति इनका, क्रिया से पड़े नाम सम्बन्धी जो संस्कार हैं, जैसे वह ठीक—ठीक हों, वैसे, और जैसे स्फुट अर्थ वाले हों वैसे इन्हे कहें तो पुरुष को पुरिशय' 'अश्व को अष्टा' और तृण को 'तर्दन' भी कहा जायगा।

इसके अतिरिक्त सिद्ध नामों के व्यवहार पर विचार करते हैं तो प्रथम (फैलाने की क्रिया) से पृथ्वी कही जाती है। भला (सोचें तो सही) किसने इसको

अर्थे आप्रदेशिके विकारे पदेभ्यः पदेतरार्धान् सञ्चस्कार शाकटायनः, एतैः कारितञ्च यकारादिञ्च, अन्तकरणमस्तेः शुद्धञ्च सकारादिञ्च। अथापि सत्त्वपूर्वो भाव इत्याहुः, अपरस्माद् भावात् पूर्वस्य प्रदेशो नोपपद्यते इति तदेतन्नोपपद्यते।

---

## गुरुभक्तिः

### ( महाभारतात् )

### ( ई० पू०—५०० )

[ अयं गद्यांश, महाभारतस्य आदिपर्वतः उद्धृतः। अत्र आरुणे गुरुभक्तेः प्रसिद्धा कथा वर्णिता अस्ति। गुरुः शिष्यस्य भक्ति-परीक्षां करोति स्म। तत्र त्रयाणां शिष्याणां भक्तेः परीक्षायाः कथा अधस्तात् विलिख्यते ]

### आरुणिः

एतस्मिन्नन्तरे कश्चिद् ऋषिः धौम्यो नाम आयोदः। तस्य शिष्याः त्रयः बभूवुः—उपमन्युः, आरुणिः, वेदश्चेति। स एकं शिष्यमारुणिं पाञ्चाल्यं प्रेषयामास। गच्छ, केदार-खण्डं बधान इति। उपाध्यायेन संदिष्टः आरुणिः पाञ्चाल्यः तत्र गत्वा तत् केदार-खण्डं बद्धुं नाशक्नोत्। स-

---

फैलाया और फैलानें वाले का आधार क्या था? (अर्थात् कहाँ खड़े होकर उसने फैलाया)। इसके अतिरिक्त जहाँ अर्थ अनुगत नहीं और धातु सम्बन्धी बनावट नहीं वहीं शाकटायन ने पदों से दूसरे पदों के आधे भाग बना डाले हैं। जैसे इ का णिजन्त रूप यकारादि भाग अन्त में किया और अस का शुद्ध सकारादि। इसके अतिरिक्त क्रिया द्रव्य के साथ होती है। यदि यह कहते हैं तो पीछे होने वाली क्रिया से पहले-पहले होने वाले को बताना सिद्ध नहीं होता, अतः सभी नाम आख्यातज हैं यह सिद्ध नहीं होता।

---

गुरुभक्ति—१० आरुणि

धौम्य आयोद नाम के कोई ऋषि थे। उनके उपमन्यु, आरुणि और वेद नाम के तीन शिष्य हुए। उन्होंने एक शिष्य आरुणि पांचाल्य को खेत की मेंड़ बाँधने के लिए भेजा। आचार्य की आज्ञा से आरुणि पञ्चाल्य वहाँ जाकर उस मेड़ के बाँधने में समर्थ न हो सका। बड़ी कठिनाई के बाद उसे एक उपाय सूझा।

क्लिश्यमानः अपश्यद् उपायम्। भवतु एवं करिष्यामीति। स तत्र संविवेश केदारखण्डे। शयाने तस्मिन् तदुदकं तस्थौ। ततः कदाचिद् उपाध्यायः आयोदो धौम्यः शिष्यान् अपृच्छत्। क्व आरुणिः पाञ्चाल्यो गत इति। ते प्रत्यूचुः। भगवतैव प्रेषितः, गच्छ, केदार—खण्डं बधान इति। एवमुक्तः तान् शिष्यान् प्रत्युवाच। तस्मात् सर्वे तत्र गच्छामो यत्र स इति। स तत्र गत्वा तस्य आह्वानाय शब्दं चकार। भो आरुणे, पाञ्चाल्य, क्वासि वत्स, एहीति। स तत् श्रुत्वा आरुणिः उपाध्यायवाक्यं तस्मात् केदार-खण्डात् सहसा उत्थाय तमुपाध्यायमुपतस्थे। प्रोवाच चैनम्—'अयमस्मि अत्र केदार-खण्डे निस्सरमाणमुदकमवारणीयं संरोद्धुं संदिष्टः, भगवत् शब्दं श्रुत्वैव सहसा विदार्य केदार-खण्डं भवन्तमुपस्थितः। तदभिवादये भगवन्तम्। आज्ञापयतु भवान् किं करवाणीति।' तमुपाध्यायोऽब्रवीत्—'यस्माद् भवान् केदार-खण्डमवदार्य उत्थितः तस्मात् भवान् उद्दालक एव नाम्ना भविष्यतीति।' स उपाध्यायेन अनुगृहीतः—'यस्मात् त्वया मद्वचोऽनुष्ठितं तस्मात् श्रेयोऽवाप्स्यसीति। सर्वे च ते वेदाः प्रतिभास्यन्ति, सर्वाणि च धर्मशास्त्राणीति। स एवमुक्तः उपाध्यायेन इष्टं देशं जगाम।

---

अच्छा, ऐसा ही करूँगा, ऐसा सोचकर वह मेंड़ के पास सो गया। उसके सोने पर पानी रुक गया। कुछ समय पश्चात् आचार्य धौम्य आयोद ने शिष्यों से पूछा—आरुणि पाञ्चाल्य कहाँ गया। उन्होंने उत्तर दिया—आप ही ने तो भेजा है कि जाओ, खेत की मेंड़ बांधो। ऐसा कहने पर उन्होंने उन शिष्यों से कहा—हम सब भी वहीं चलें जहाँ वह गया है। उन्होंने वहाँ जाकर उसे बुलाने के लिए आवाज लगाई—हे आरुणे पाञ्चाल्य, पुत्र! कहाँ हो? यहाँ आओ। आरुणि आचार्य की यह वाणी सुनकर तत्काल उस मेंड़ से उठ पड़ा, आचार्य के पास पहुंचा और उनसे बोला—इस खेत की मेंड़ में बहते हुए जल को रोकने के लिए आपने आज्ञा दी थी। मैं वहीं था। आपके शब्द को सुनते ही तत्काल मेंड़ को तोड़ कर आपके पास आया हूँ। आपको नमस्कार करता हूँ। आज्ञा दीजिए क्या करूँ। आचार्य ने ऊससे कहा—तुम खेत की मेंड़ को फाड़कर उठे हो इस लिए अबसे तुम्हारा नाम उद्दालक होगा। तुम पर आचार्य की कृपा हुई है। तुमने मेरी आज्ञा का पालन किया है—इसलिए तुम्हारा कल्याण होगा। तुम्हें सारे वेदों

## उपमन्युः

अथ अपरः शिष्यः तस्यैव आयोदस्य धौम्यस्य उपमन्युः नाम। तमुपाध्यायः प्रेषयामास। 'वत्स, उपमन्यो, गाः रक्षस्वेति।' स उपाध्यायवचनादरक्षद् गाः। स च अहनि गाः रक्षित्वा दिवसक्षये अभ्यागम्य उपाध्यायस्य अग्रतः स्थित्वा नमश्चक्रे। तमुपाध्यायः पीवानमपश्यत्। उवाच चैनम्—'वत्स, उपमन्यो! केन वृत्तिं कल्पयसि? पीवाऽसि दृढमिति।' स उपाध्यायं प्रत्युवाच—,भैक्ष्येण वृत्तिं कल्पयामीति।' तमुपाध्यायः प्रत्युवाच—'मामनिवेद्य भैक्ष्यं नोपभोक्तव्यमिति।'

स तथेत्युक्त्वा पुनः अरक्षद् गाः। रक्षित्वा चागम्य तथैव उपाध्यायस्य अग्रतः स्थित्वा नमश्चक्रे। तमुपाध्यायः तथापि पीवानमेव दृष्ट्वा उवाच—'वत्स, उपमन्यो! सर्वं ते अशेषतः भैक्ष्यं गृह्णामि। केन इदानीं वृत्तिं कल्पयसीति?' स एवमुक्तः उपाध्यायेन प्रत्युवाच—'भगवते निवेद्य पूर्वम्, अपरं चरामि। तेन वृत्तिं कल्पयामीति।' तमुपा-

---

और सभी धर्मशास्त्रों का परिज्ञान हो जायगा। आचार्य के ऐसा कहने पर वह अपने इष्ट स्थान को चला गया।

---

### २. उपमन्यु

उस धौम्य आयोद का दूसरा शिष्य उपमन्यु था। आचार्य ने उसे भेजा कि पुत्र उपमन्यु, गायों की रक्षा करो। वह आचार्य की आज्ञा से गायों की रखवाली करने लगा। वह दिन में गायों की रखवाली करके संध्या समय लौटकर आचार्य के आगे खड़े होकर नमस्कार करता था। आचार्य ने उसे मोटा तगड़ा देखा और उससे पूछा—पुत्र उपमन्यु, तुम भोजन क्या करते हो? बहुत मोटे-तगड़े हो गए हो? उसने आचार्य से कहा—मैं भीख मांगकर भोजन करता हूँ। आचार्य ने उससे कहा—बिना मुझे समर्पित किए भीख का अन्न तुम्हें नहीं खाना चाहिए।

ऐसा ही करूँगा—ऐसा कह कर वह फिर गायों की रखवाली करने लगा। रखवाली करके लौट कर फिर उसने उसी प्रकार उपाध्याय के आगे खड़े होकर नमस्कार किया। आचार्य ने उसे फिर भी मोटा देख कर कहा—पुत्र! मैं तुम्हारे सभी भीख के अन्न को ले लेता हूं। फिर अब तुम क्या खाते हो? आचार्य के ऐसा कहने पर उसने कहा—पहले की भीख आप को दे देता हूँ, फिर दूसरी माँग

ध्यायः प्रत्युवाच—'नैषा न्याय्या गुरुवृत्तिः। अन्येषामपि वृत्त्युपरोधं करोष्येवं वर्त्तमानः, लुब्धोऽसीति।'

स तथेत्युक्त्वा गाः अरक्षत्। रक्षित्वा च पुनः उपाध्यायगृहमागम्य उपाध्यायस्य अग्रतः स्थित्वा नमश्चक्रे। तमुपाध्यायः तथापि पीवानमेव दृष्ट्वा पुनरुवाच—'अहं ते सर्वं भैक्ष्यं गृह्णामि, न च अन्यत् चरसि, पीवाऽसि केन वृत्तिं कल्पयसीति ?' स उपाध्यायं प्रत्युवाच—'भोः एतासां गवां पयसा वृत्तिं कल्पयामीति।' तमुपाध्यायः प्रत्युवाच—'नैतन्न्याय्यं पय उपभोक्तुं भवतो मयाऽननुज्ञातमिति।'

स तथेति प्रतिज्ञाय गाः रक्षित्वा पुनरुपाध्यायगृहान् उपेत्य गुरोरग्रतः स्थित्वा नमश्चक्रे। तमुपाध्यायः पीवानमेव अपश्यत्। उवाच चैनम्—'भैक्ष्यं नाश्नासि, न चान्यत् चरसि। पयो न पिबसि। पीवाऽसि। केन वृत्तिं कल्पयसीति ?' स एवमुक्तः उपाध्यायं प्रत्युवाच—'भोः फेनं पिबामि। यमिमे वत्साः मातॄणां स्तनं पिबन्तः उद्गिरन्तीति।'

तमुपाध्यायः प्रत्युवाच—'एते त्वदनुकम्पया गुणवन्तो वत्साः प्रभूत-

---

लेता हूं और उसी से जीविका चलाता हूँ। आचार्य ने उससे कहा—यह न्यायोचित श्रेष्ठवृत्ति नहीं है। इस प्रकार रहते हुए तुम दूसरों की जीविका रोकते हो, बड़े लालची हो।

मैं ऐसा ही करूँगा—ऐसा कह कर गायों की रखवाली करने लगा। रखवाली करके फिर आचार्य के घर आकर उनके सम्मुख खड़े होकर उसने नमस्कार किया। इस पर भी आचार्य ने उसे मोटा ही देखकर कहा—मैं तुम्हारी सारी भीख ले लेता हूं, तुम दूसरी भी नहीं माँगते, फिर भी मोटे हो। कैसे अपनी जीविका चलाते हो ! उसने आचार्य से कहा—मैं इन गायों के दूध से अपनी जीविका चलाता हूं। आचार्य ने उससे कहा—मुझसे बिना आज्ञा लिए तुम्हारा दूध पीना उचित नहीं है।

ऐसा ही करूँगा—ऐसी प्रतिज्ञा करके उसने फिर गायों को चराकर आचार्य के घर आकर गुरु के सामने जाकर नमस्कार किया। आचार्य ने उसे मोटा ही देखा और कहा—भीख नहीं खाते हो, दूसरी भीख नहीं माँगते हो, दूध भी नहीं पीते हो; फिर भी मोटे हो। अब जीविका कैसे चलाते हो ? उसने ऐसा कहने पर उपाध्याय से कहा—मैं फेन पीता हूँ जिसे ये बछड़े अपनी माँ का थन पीते हुए गिरा देते हैं।

आचार्य ने उससे कहा—ये गुणी बछड़े तुम्हारे ऊपर दया करके अधिक फेन

तरं फेनमुद्गिरन्ति । तदेवमपि वत्सानां वृत्त्युपरोधं करोषि एवं वर्त्तमानः । फेनमपि भवान्न पातुमर्हतीति ।'

स तथेति प्रतिज्ञाय निराहारः ताः गाः अरक्षत् । तथा प्रतिषिद्धो भैक्ष्यं नाश्नाति न चान्यच्चरति । पयो न पिबति । फेनं नोपयुक्ते । स कदाचिदरण्ये क्षुधार्तोऽर्कपत्राणि अभक्षयत् । स तैः अर्कपत्रैः क्षारकटूष्णविपाकिभिः चक्षुषि उपहतः अन्धः अभवत् । स अन्धोऽपि चङ्क्रम्यमाणः कूपे अपतत् ।

अथ तस्मिन् अनागच्छति उपाध्यायः शिष्यानवोचत्—'मया उपमन्युः सर्वतः प्रतिषिद्धः । स नियतं कुपितः । ततो नागच्छति । चिरगतश्चेति ।' स एवमुक्त्वा गत्वा अरण्यम् उपमन्योराह्वानम् चक्रे—'भो उपमन्यो ! क्वासि वत्स ! एहीति' । तदाह्वानम् उपाध्यायात् श्रुत्वा प्रत्युवाच उच्चैः—'अयमस्मि भो उपाध्याय, कूपे पतित इति' स तं प्रत्युवाच—'अर्कपत्राणि भक्षयित्वा अन्धीभूतोऽस्मि । अतः कूपे पतित इति' तमुपाध्यायः प्रत्युवाच—'अश्विनौ स्तुहि । तौ त्वां चक्षुष्मन्तं

---

गिरा देते होंगे । इसलिए ऐसा करके तुम इन बछड़ों की जीविका छीनते हो । तुम्हें फेन भी पीना उचित नहीं ।

ऐसा ही करूँगा—ऐसी प्रतिज्ञा करके वह भूखे ही गायों की रखवाली करने लगा । वह न भीख का अन्न खाता, न दूसरी भीख मांगता, न दूध पीता, न फेन ही पीता । एक बार भूख से व्याकुल होकर उसने जंगल में मदार के पत्तों को खा लिया । उन खारे, और कड़वे गर्म विपाक वाले मदार के पत्तों से उसकी आखें फूट गई और वह अंधा हो गया । अंधा होने पर भी घूमता हुआ वह कुएं में गिर पड़ा ।

इसके पश्चात् उसके घर न आने पर आचार्य ने शिष्यों से कहा—मैंने उपमन्यु को सभी चीजें खाने से रोक दिया था । वह निश्चित ही नाराज हो गया है । इसीलिए नहीं आया है । वह सर्वदा के लिए चला गया है । उन्होंने ऐसा कह कर जंगल में जाकर उपमन्यु को बुलाना प्रारंभ किया । हे उपमन्यु ! पुत्र ! कहाँ हो ? यहाँ आओ । उसने आचार्य का बुलाना सुनकर जोर से कहा—आचार्य ! मैं यहाँ कुएँ में गिरा हुआ हूँ, और उसने कहा—मैं मदार का पत्ता खाने से अंधा हो गया हूं । इसीलिए कुएँ में गिर पड़ा हूँ । आचार्य ने उससे कहा—अश्विनीकुमारों की

तरं फेनमुद्गिरन्ति। तदेवमपि वत्सानां वृत्त्युपरोधं करोषि एवं वर्त्तमानः। फेनमपि भवान्न पातुमर्हतीति।'

स तथेति प्रतिज्ञाय निराहारः ताः गाः अरक्षत्। तथा प्रतिषिद्धो भैक्ष्यं नाश्नाति न चान्यच्चरति। पयो न पिबति। फेनं नोपयुङ्क्ते। स कदाचिदरण्ये क्षुधार्तोऽर्कपत्राणि अभक्षयत्। स तैः अर्कपत्रैः क्षारकटूष्णविपाकिभिः चक्षुषि उपहतः अन्धः अभवत्। स अन्धोऽपि चङ्क्रम्यमाणः कूपे अपतत्।

अथ तस्मिन् अनागच्छति उपाध्यायः शिष्यानवोचत्—'मया उपमन्युः सर्वतः प्रतिषिद्धः। स नियतं कुपितः। ततो नागच्छति। चिरगतश्चेति।' स एवमुक्त्वा गत्वा अरण्यम् उपमन्योराह्वानम् चक्रे—'भो उपमन्यो! क्वासि वत्स! एहीति'। तदाह्वानम् उपाध्यायात् श्रुत्वा प्रत्युवाच उच्चैः—'अयमस्मि भो उपाध्याय, कूपे पतित इति' स तं प्रत्युवाच—'अर्कपत्राणि भक्षयित्वा अन्धीभूतोऽस्मि। अतः कूपे पतित इति' तमुपाध्यायः प्रत्युवाच—'अश्विनौ स्तुहि। तौ त्वां चक्षुष्मन्तं

---

गिरा देते होंगे। इसलिए ऐसा करके तुम इन बछड़ों की जीविका छीनते हो। तुम्हें फेन भी पीना उचित नहीं।

ऐसा ही करूँगा—ऐसी प्रतिज्ञा करके वह भूखे ही गायों की रखवाली करने लगा। वह न भीख का अन्न खाता, न दूसरी भीख मांगता, न दूध पीता, न फेन ही पीता। एक बार भूख से व्याकुल होकर उसने जंगल में मदार के पत्तों को खा लिया। उन खारे, और कड़वे गर्म विपाक वाले मदार के पत्तों से उसकी आखें फूट गई और वह अंधा हो गया। अंधा होने पर भी घूमता हुआ वह कुएं में गिर पड़ा।

इसके पश्चात् उसके घर न आने पर आचार्य ने शिष्यों से कहा—मैंने उपमन्यु को सभी चीजें खाने से रोक दिया था। वह निश्चित ही नाराज हो गया है। इसीलिए नहीं आया है। वह सर्वदा के लिए चला गया है। उन्होंने ऐसा कह कर जंगल में जाकर उपमन्यु को बुलाना प्रारंभ किया। हे उपमन्यु ! पुत्र ! कहाँ हो? यहाँ आओ। उसने आचार्य का बुलाना सुनकर जोर से कहा—आचार्य ! मैं यहाँ कुएँ में गिरा हुआ हूँ, और उसने कहा—मैं मदार का पत्ता खाने से अंधा हो गया हूँ। इसीलिए कुएँ में गिर पड़ा हूँ। आचार्य ने उससे कहा—अश्विनीकुमारों की

करिष्यतः देवभिषजौ इति।' स एवमुक्तः उपाध्यायेन स्तोतुं प्रचक्रमे देवौ अश्विनौ वाग्भिः ऋग्भिः।

एवं तेन अभिष्टुतौ अश्विनौ आजग्मतुः। आहतुश्च एनम्—'प्रीतौ स्वः। एष ते अपूपः। अशान एनमिति।' स एवमुक्तः प्रत्युवाच—'नानृतमूचतुः भवन्तौ। न त्वहमेतमपूपमुपयोक्तुमुत्सहे, अनिवेद्य गुरवे इति।' ततः तमश्विनौ ऊचतुः—'आवाभ्यां पुरस्ताद् भवतः उपाध्यायेनैव अभिष्टुताभ्यामपूपः प्रीताभ्यां दत्तः। उपभुक्तश्च तेन अनिवेद्य गुरवे। त्वमपि तथैव कुरुष्व यथा कृतमुपाध्यायेनेति।'

स एवमुक्तः पुनरेव प्रत्युवाच एतौ—'प्रत्यनुनये भवन्तावश्विनौ। नोत्सहे अहमनिवेद्योपाध्यायायोपयोक्तुमिति'। तमश्विनावाहतुः—'प्रीतौ स्वः तव अनया गुरुवृत्त्या। उपाध्यायस्य ते कार्ष्णायसाः दन्ताः। भवतः हिरण्मयाः भविष्यन्ति। चक्षुष्मान् च भविष्यसि। श्रेयश्चावाप्स्यसीति।' स एवमुक्तः अश्विभ्यां लब्धचक्षुः उपाध्यायसकाशमागम्य उपाध्यायमभिवाद्याचचक्षे। स चास्य प्रीतिमान् अभूत्। आह चैनम्—'यथा अश्विनौ

---

प्रार्थना करो। वे देवताओं के वैद्य तुम्हें नेत्रयुक्त कर देंगे। आचार्य के ऐसा कहने पर उसने ऋग्वेद की ऋचाओं से अश्विनीकुमारों की प्रार्थना करना प्रारंभ किया।

उससे इस प्रकार प्रार्थित होकर अश्विनीकुमार आ पहुंचे और उन्होंने उससे कहा—हम प्रसन्न हैं। यह तुम्हारे लिए मालपुआ है, इसे खा लो। ऐसा कहने पर उसने कहा—आप बिल्कुल ठीक कहते हैं किन्तु बिना गुरु की आज्ञा लिए मैं इस मालपूए को नहीं खा सकता। तब अश्विनीकुमारों ने उससे कहा—इसके पहले तुम्हारे उपाध्याय के द्वारा प्रार्थना करने पर हम लोगों ने प्रसन्न होकर उन्हें भी मालपुआ दिया था और उन्होंने बिना गुरु के कहे खाया था। इसलिए तुम भी वैसा ही करो जैसा तुम्हारे गुरु ने किया है।

ऐसा कहने पर उसने फिर उन दोनों से कहा—आप अश्विनीकुमारों की प्रार्थना करता हूँ। मैं बिना गुरु की आज्ञा लिए उसे खाने का साहस नहीं कर सकता। तब अश्विनीकुमारों ने उससे कहा—तुम्हारी इस गुरुभक्ति से हम दोनों प्रसन्न हैं। तुम्हारे आचार्य के काले लोहे के दाँत हैं। तुम्हारे दाँत सोने के होंगे और तुम्हारी आँखें ठीक हो जायँगी तथा तुम्हारा कल्याण होगा। ऐसा कहने पर वह अश्विनीकुमारों द्वारा आँखें पाकर आचार्य के पास आया और उसने उन्हें प्रणाम करके सब बातें सुना दीं। आचार्य उस पर प्रसन्न हो उठे और बोले—जैसा

आहतुः तथा त्वं श्रेयोऽवाप्स्यसीति । सर्वे च ते वेदाः प्रतिभास्यन्ति ।' एषा तस्यापि परीक्षा उपमन्योः ।

## वेदः

अथापरः शिष्यस्तस्यैव आयोदस्य धौम्यस्य वेदो नाम । तमुपाध्यायः संदिदेश—'वत्स वेद ! इहास्यताम् । भवता मद्गृहे कञ्चित् कालं शुश्रूषमाणेन भवितव्यम्, श्रेयस्ते भविष्यतीति' स तथेत्युक्त्वा गुरुकुले दीर्घकालं गुरुशुश्रूषणपरोऽवसत् । गौरिव नित्यं गुरुषु धूर्षु नियुज्यमानः शीतोष्णक्षुत्-तृष्णा-दुःखसहः सर्वत्राऽप्रतिकूलः । तस्य महता कालेन गुरुः परितोषं जगाम । तत्परितोषाच्च श्रेयः सर्वज्ञतां च अवाप । एषा तस्यापि परीक्षा वेदस्य ।

स उपाध्यायेनानुज्ञातः समावृत्तः तस्मात् गुरुकुलवासात् गृहाश्रमं प्रत्यपद्यत । तस्यापि स्वगृहे वसतः त्रयः शिष्या बभूवुः । स शिष्यान् न किंचिदुवाच । कर्म वा क्रियतां गुरुशुश्रूषा वेति । दुःखाभिज्ञो हि गुरुकुलवासस्य । शिष्यान् क्लेशेन योजयितुं न इयेष ।

---

अश्विनीकुमारों ने कहा है, तुम उसी प्रकार कल्याण प्राप्त करोगे । तुम्हें सम्पूर्ण वेदों का परिज्ञान हो जायगा । यह उपमन्यु की परीक्षा थी ।

उस आयोद धौम्य का दूसरा शिष्य वेद नाम वाला था । उसे आचार्य ने आज्ञा दी—पुत्र ! यहीं बैठो । कुछ समय तक तुम मेरे घर सेवक के समान रहो । तुम्हारा कल्याण होगा 'ऐसा ही करूँगा' उसने ऐसा कह कर उस गुरु की सेवा करते हुए बहुत दिन तक निवास किया । भारी बोझा ढोने में नियुक्त किये हुये बैल के समान प्रसन्नता से वह शीत-गर्मी, भूख-प्यास आदि दुःख सहता हुआ गुरु की सेवा में लगा रहा । बहुत दिन बीत जाने पर गुरु संतुष्ट हुए । उनकी संतुष्टि से उसने कल्याण और संपूर्ण ज्ञान प्राप्त किया । यह वेद की परीक्षा थी ।

वह आचार्य की आज्ञा से गुरुकुल से लौट कर गृहस्थ बन गया । अपने घर में रहते हुए उसके भी तीन शिष्य हुए उसने अपने शिष्यों से कुछ नहीं कहा । काम करो अथवा गुरु की सेवा । वह गुरुकुल में रहने का कष्ट जानता था । अतः शिष्यों को किसी कष्ट में नहीं डालना चाहता था ।

# गङ्गावतरणम्

## ( विष्णुपुराणात् )

### ( चतुर्थेऽशे चतुर्थोऽध्यायः )

### ( ई० पू० ४५० )

पराशर उवाच—कश्यप-दुहिता सुमतिः, विदर्भराजतनया च केशिनी, द्वे भार्ये सगरस्य आस्ताम्। ताभ्यां च अपत्यार्थमाराधितः और्वः परमेण समाधिना वरमदात्। एका वंशधरम् एकं पुत्रम् , अपरा षष्टिं पुत्र-सहस्राणि जनयिष्यतीति। यस्याः यदभिमतं तदिच्छया गृह्यताम् इत्युक्ते केशिनी पुत्रमेकं सुमतिः षष्टिपुत्रसहस्राणि वव्रे। तथेति च ऋषिणाऽभिहिते अल्पैरेव अहोभिः एका एकम् असमञ्जसं नाम वंशधरं पुत्रमसूत केशिना, विनता-तनयायाः तु सुमत्याः षष्टिः पुत्रसहस्राण्यभवन्। तस्मादसमञ्जसः अंशुमान् नाम कुमारो जज्ञे। स तु असमञ्जसः बाल्यादेव अपवृत्तः। पिता चास्य अचिन्तयत् यद् अयमतीतबाल्यः बुद्धिमान् भविष्यतीति। अथ तत्रापि वयसि अतीते तच्चरितमेव एनं पिता तत्याज। तान्यपि षष्टिः कुमारसहस्राणि असमञ्जसमनुचक्रुः। ततश्च अस-

---

गंगावतरण

पराशर ने कहा—सगर की दो स्त्रियाँ थीं-एक कश्यप की पुत्री सुमति तथा दूसरी विदर्भराज की पुत्री केशिनी। उन दोनों ने बड़ी निष्ठा से और्वऋषि की अराधना की। उन्होंने वर दिया—एक, वंश को बढ़ाने वाला एक, तथा दूसरी साठ हजार पुत्र पैदा करेगी। जिसे जो इच्छा हो वह-वह वर ले ले। केशिनी एक पुत्र तथा सुमति ने साठ हजार पुत्र का वरण किया। ऋषि के कथनानुसार थोड़े ही दिनों में केशिनी ने वंश को बढ़ाने वाले असमञ्जस नामक पुत्र को उत्पन्न किया और बिनता की पुत्री सुमति से साठ हजार लड़के पैदा हुए। उस असमञ्जस से अंशुमान नाम के कुमार पैदा हुए। असमञ्जस बचपन से ही बुरे स्वभाव का था। इसके पिता ने सोचा कि बचपन बीत जाने पर यह समझदार हो जायगा। किन्तु बचपन बीतने पर भी वैसे ही आचरण करने वाले उसको पिता ने घर से निकाल दिया। किन्तु उन साठ हजार कुमारों ने भी असमञ्जस का ही अनुकरण

मञ्जसचरितानुकारिभिः सागरैः अपध्वस्तयज्ञसन्मार्गे जगति, देवाः सकलविद्यामयमसंस्पृष्टम् अवशेषदोषैःभगवतः पुरुषोत्तमस्य अंशभूतं कपिलम् ऋषिं प्रणम्य तदर्थमूचुः 'भगवन् एभिः सगरतनयैः असमञ्जसचरितम् अनुगम्यते। कथमेवम् एभिः अनुसरद्भिः जगद् भविष्यतीत्यार्त्तजगत्परित्राणाय च भगवतः अत्र शरीरकरणमिति आकर्ण्य भगवान् अल्पैरेव दिनैः एते विनंक्ष्यन्तीति उक्तवान्। तत्रान्तरे च सगरो हयमेधमारेभे। तत्र पुत्रैः अधिष्ठितमस्य अश्वं कोऽपि अपहृत्य भुवो विवरं प्रविवेश। ततश्च अश्वान्वेषणाय तनयान् युयोज। ततः तनयाश्च अतिनिर्बन्धेन वसुधातलम् एकैकः योजनं योजनमवनेः चखान। पाताले च अश्वं परिभ्रमन्तमवनिपतिनन्दनाः ते ददृशुः। नातिदूरस्थितं च भगवन्तम् अपघने शरत्काले अर्कमिव तेजोभिः अनवरतम् ऊर्ध्वमधश्च अशेषदिशः उद्भासयमानं कपिलम् ऋषिमपश्यन्। ततश्च उद्यतायुधाः दुरात्मा अयमस्मदपकारी यज्ञविघातकर्त्ता हयहर्त्ता हन्यतां हन्यतामित्यधावन्। ततश्च तेनापि भगवता किञ्चित् ईषत् परिवर्तितलोचनेन अवलोकिताः

---

किया। उन असमञ्जस जैसे बुरे आचरण वाले सगर-पुत्रों ने संसार में यज्ञ आदि अच्छे मार्गों को नष्ट कर डाला। इस पर देवताओं ने संपूर्ण विद्याओं से युक्त, संपूर्ण दोषों से रहित भगवान् पुरुषोत्तम के अंशावतार कपिल ऋषि को प्रणाम करके कहा—भगवान् ! ये सगर के लड़के असमञ्जस के कुकृत्यों का ही अनुसरण कर रहे हैं। इनके ऐसा करने से संसार का क्या होगा ? और दुखी संसार की रक्षा करने के लिए आपका अवतार हुआ है। ऐसा सुनकर भगवान् ने कहा—थोड़े ही दिनों में ये नष्ट हो जायँगे। इसी बीच राजा सगर ने अश्वमेध आरंभ किया। उस समय उसके पुत्रों से रक्षित घोड़े को कोई चुरा कर पृथ्वी के बिल में घुस गया। तब राजा सगर ने घोड़े को खोजने के लिए पुत्रों को नियुक्त किया। उन लड़कों ने अत्यंत उद्दंडता के साथ पृथ्वी के एक-एक योजन को खोद डाला। उन राजकुमारों ने पाताल में घोड़े को घूमते हुए देखा और शरत् काल में बादलों के हट जाने पर सूर्य के समान निरंतर तेज से ऊपर-नीचे सभी दिशाओं को प्रकाशित करते हुए कपिल ऋषि को देखा। तब हथियार लेकर वे 'यह दुष्ट है, यही हमारा अपकार करने वाला है, यज्ञ का विनाशक है, घोड़े का चुराने वाला है, मारो, मारो' यह कहते हुए दौड़े। इसके पश्चात् भगवान् कपिल ने उन्हें कुछ

स्वशरीरमुत्थेन अग्निना दह्यमानः विनेशुः। सगरोऽपि अनुगम्य अश्वानुसारि तत्पुत्रबलमशेषं परमर्षिकपिल-तेजसा दग्धमंशुमन्तम् असमञ्जसं पुत्रमश्वानयनाय चोदयामास। स तु सगरतनय-खात-मार्गेण कपिलमुपगम्य भक्तिनम्रः तथा तथा तुष्टाव यथा एनं भगवान् आह—'गच्छ, एनं पितामहाय अश्वं प्रापय, वरं वृणीष्व च। पुत्रपौत्रश्च ते स्वर्गाद् गङ्गामानयिष्यती'ति। अथ अंशुमानपि, ब्रह्मदण्डहतानाम् अस्मत्पितॄणां स्वर्गाय अस्वर्गयोग्यानां स्वर्गप्राप्तिकरं वरमस्माकं भगवान् प्रयच्छतु—इत्याह। तं च आह भगवान्—'उक्तमेव एतन्मया पुत्रस्ते त्रिदिवाद् गङ्गां भुवमानयिष्यतीति। तदम्भसा संस्पृष्टेषु अस्थिभस्मसु एते स्वर्गमारोक्ष्यन्तीति।'

भगवद्विष्णुपादाङ्गुष्ठविनिर्गतजलस्य हि तत् यत् न केवलमभिसंधिपूर्वकं स्नानाद्युपभोगेषूपकारकम् अनभिसंहितमपि अपेतप्राणस्य अस्थिचर्मस्नायुकेशादि उत्सृष्टं शरीरजं यद् भूपतितं सद्यः शरीरिणं स्वर्गं नयतीत्युक्तः, प्रणम्य च भगवते अश्वमादाय पितामहयज्ञमाजगाम।

---

टेढ़ी निगाहों से देखा और अपने शरीर से उठी हुई आग में जला कर नष्ट कर दिया। राजा सगर ने घोड़े का अनुसरण करने वाली अपनी पुत्र-सेना को पूर्णतः कपिल के तेज में जली हुई सुनकर असमंजस के पुत्र अंशुमान को घोड़ा लाने के लिए भेजा। उसने सगर के पुत्रों द्वारा खोदे हुए मार्ग से कपिल के पास जाकर भक्तिपूर्वक नम्र होकर उन्हें इस प्रकार प्रसन्न किया जिससे भगवान् ने कहा—जाओ, यह घोड़ा अपने दादा के पास पहुंचा दो और वर मांगो। तुम्हारे पुत्र पौत्र स्वर्ग से गंगा को ले आएंगे। अंशुमान ने कहा—ब्रह्मदण्ड से मारे गए हमारे पितरों के स्वर्ग के लिए स्वर्ग प्राप्त कराने वाला कोई वर दीजिए। कपिल ने उससे कहा—मैंने कहा है कि तुम्हारा पुत्र गंगा को स्वर्ग से भूमि पर ले आएगा। उसका जल अस्थि भस्म पर पड़ने से ये स्वर्ग चले जायंगे।

भगवान् विष्णु के पैरों के अंगूठे से निकला हुआ यह वही जल है जो नियमपूर्वक स्नानादि करने से ही लाभप्रद नहीं है, बल्कि प्राणरहित पृथ्वी पर पड़े हुए मनुष्य के हड्डी, चमड़े, नाड़ी, बाल आदि शरीर के किसी अंग पर पड़ने से शरीरधारी को स्वर्ग पहुंचा देता है। अंशुमान ऋषि को प्रणाम करके घोड़े को लेकर अपने दादा के यज्ञ में चला गया।

सगरोऽपि अश्वमादाय तं यज्ञं समापयामास। सागरं च आत्मजप्रीत्या पुत्रत्वे कल्पयामास। तस्यापि अंशुमतः दिलीपः पुत्रोऽभवत्। दिलीपस्यापि भगीरथो योऽसौ गङ्गां स्वर्गादिहानीय भागीरथीसंज्ञां चकार।

---

## श्रीवासुदेवस्य दौत्यम्

( दूतवाक्यात् )

महाकविः भासः

( ई० पू०—४०० )

[सर्वेषु नाटककारेषु प्राचीनतमोऽयं भासः। अयमंशः भासरचितात् दूतवाक्यमिति नामधेयात् व्यायोगात् उद्धृतः। अत्र महाभारतीया कथा वर्णिता। श्रीकृष्णः वासुदेवः पाण्डवानां दूतो भूत्वा दुर्योधनस्य सभायामगच्छति। राज्यार्धं च दायाद्य दुर्योधनं याचते किन्तु दुर्योधनः दातुं नेच्छति।]

कञ्चुकी—जयतु जयतु महाराजः। एष खलु पाण्डवशिबिराद् दौत्येन आगतः पुरुषोत्तमो नारायणः।

दुर्योधनः—मा तावत् भो वादरायण! किं किं स कंसभृत्यः दामोदरः तव पुरुषोत्तमः? स गोपालकः? तव पुरुषोत्तमः? आः सत्वरं निर्गच्छ मम पुरतः।

---

राजा सगर ने घोड़े को पाकर यज्ञ को समाप्त किया और पुत्र प्रेम के कारण सागर को ही अपना पुत्र बना लिया। उस (सागर के पौत्र) अंशुमान से दिलीप पैदा हुए। दिलीप से भगीरथ हुए, जिसने गंगा को स्वर्ग से पृथ्वी पर लाकर उसका नाम भागीरथी कर दिया। (दिलीप के पुत्र 'रघु' या 'भगीरथ' द्र. 'इन्दुमती' टीका रघुवंश सर्ग ३ का पर्यालोचन )

भगवान् कृष्ण का दूतकर्म

कंचुकी—महाराज की जय हो, जय हो! पांडवों के शिविर से दूत रूप में पुरुषोत्तम नारायण आए हैं।

दुर्योधन—हे बादरायण! ऐसा मत कहो? क्या वह कंस का सेवक, जो रस्सी से बांधा गया था, तुम्हारा पुरुषोत्तम है? क्या वह गायों को चराने वाला तुम्हारा पुरुषोत्तम है? शीघ्र ही मेरे सामने से चले जाओ।

कञ्चुकी—प्रसीदतु प्रसीदतु महाराजः। दूतः प्राप्तः केशवः।

दुर्योधनः—भोः, सम्यक् कथयसि साम्प्रतम्। भो भो राजानः! योऽस्य केशवस्य कृते प्रत्युत्थास्यति, तमहं दण्डयिष्यामि।

बादरायण! प्रवेशय अधुना तं दूतम्।

कंचुकी—यद् आज्ञापयति महाराजः। (इति निर्गच्छति)

दुर्योधनः—वयस्य कर्ण अद्य कृष्णमतिः स कृष्णः पाण्डवानां दौत्येन अत्रागच्छति। युधिष्ठिरस्य नारीमृदूनि वचनानि श्रोतुं, त्वमपि कर्णौ सज्जय।

(ततः प्रविशति वासुदेवः कंचुकी च)

वासुदेवः—(स्वगतम्) कथं कथं मां विलोक्य संभ्रान्ताः सर्वे राजानः? (प्रकाशम्) अलमलं संभ्रमेण। ननु स्वैरमासतां भवन्त।

दुर्योधनः—(स्वगतम्) कथं कथं केशवं दृष्ट्वा संभ्रान्ता सर्वे नृपाः? (वासुदेवं प्रति) भो दूत! एतदासनम् आस्यताम्।

वासुदेवः—आचार्य! आस्यताम् श्रीभीष्मप्रमुखा राजानः! स्वैर-मासतां श्रीमन्तः। वयमप्युपविशामः।

---

कंचुकी—महाराज! प्रसन्न हों, प्रसन्न हों। दूत केशव आए हैं।

दुर्योधन—हाँ, अब ठीकसे कहा है। हे राजाओ! जो इस केशव (जलके मुर्दे) के स्वागतमें उठ खड़ा होगा उसेमैं दंड दूँगा। बादरायण अब उस दूतको ले आओ।

कंचुकी—जैसी महाराज की आज्ञा। (चला जाता है)

दूर्योधन—मित्र कर्ण, आज कृष्ण बुद्धि वाला कृष्ण पांडवों का दूत बन कर यहां आया है। युधिष्ठिर की स्त्री-समान कोमल वाणी सुनने के लिए अपने कानों को खोल लो।

(कृष्ण और कंचुकी प्रवेश करते हैं)

वासुदेव—(अपने आप) मुझे देख कर सभी राजा क्यों हड़बड़ा से उठे हैं? (सुनाकर) आप लोग शान्त रहें और स्वच्छन्दतापूर्वक बैठे रहें।

दुर्योधन—(अपने-आप) केशव को देख कर सभी राजे क्यों हड़बड़ा से गए हैं? (कृष्ण से) हे दूत, यह आसन है, बैठो।

वासुदेव—आचार्य, बैठिए। श्री भीष्म प्रमुख राजाओ! आप लोग भी बैठिए! हम भी बैठ रहे हैं।

दुर्योधनः—भो दूत! धर्मात्मजः, वायुसुतो भीमः, इन्द्रपुत्रो मे भ्राता अर्जुनः, विनीतौ च नकुलसहदेवौ—कच्चित् सन्ति सर्वे कुशलिनः?

वासुदेवः—सदृशमेतत् गान्धारीपुत्रस्य। कुशलिनः सर्वे। भवतो राज्ये शरीरे च कुशलमनामयं पृष्ट्वा विज्ञापयन्ति युधिष्ठिरादयः पाण्डवाः-

अनुभूतं महद् दुःखं, सम्पूर्णः समयश्च सः।
अस्माकमपि धर्म्यं यद् दायाद्यं तद् विभज्यताम्॥

दुर्योधनः—कथं कथं दायाद्यमिति? देवात्मजास्ते नैवार्हन्ति दायाद्यम्।

वासुदेवः—भो राजन्! मा सैवम्। एवं परस्परविरोधस्य विवर्धनेन कुरुकुलं शीघ्रमेव नामशेषं भविष्यति। अत एव क्रोधं वैरञ्च अपहाय तदेव भवान् कर्तुमर्हति यत् त्वां युधिष्ठिरमुखाः प्रणयात् कथयन्ति।

दुर्योधनः—मनुष्याणां देवात्मजैः सह कथं बन्धुता भवेत्? भवन्तस्तु पिष्टपेषणमेव कुर्वन्ति। अस्य विषयस्य तु कथाऽपि न कर्तव्या।

वासुदेवः—भो दुर्योधन! न जानीषे तावदर्जुनस्य पराक्रमम्। पशुपतिमपि स युद्धे नाप्रीणयत्। इन्द्रादयोऽपि यस्य विक्रमं नितरां प्रशं-

---

दुर्योधन—हे दूत! धर्मपुत्र युधिष्ठिर, वायुपुत्र भीम, इन्द्र के पुत्र मेरे भाई अर्जुन और वे विनम्र नकुल तथा सहदेव सभी कुशलपूर्वक हैं न?

वासुदेव—गान्धारी (अंधी) के पुत्रका यह कहना उचित ही है! सभी कुशलपूर्वक हैं। युधिष्ठिर आदि पाण्डवों ने आप के राज्य की कुशलता और आप के शरीर के स्वास्थ्य के बारे में पूछा है और कहा है कि—

'हम लोगों ने बड़ा दुःख उठाया। वह १४ वर्ष का समय भी बीत गया, अतः धर्मानुकूल हमारा आधा दायादी हिस्सा बाँट दीजिए।'

दुर्योधन—कैसा दायादी हिस्सा? वे तो देवताओं के लड़के हैं, अतः उन्हें हिस्सा नहीं मिल सकता।

वासुदेव—हे राजन्! ऐसा न कहें। इस प्रकार परस्पर विरोध बढ़ाने से शीघ्र ही कौरवों का नाम ही बच जायगा। इसलिए क्रोध और शत्रुता छोड़ कर आप को वही करना चाहिए जिसे युधिष्ठिर आदि ने प्रेमपूर्वक कहा है।

दुर्योधन—मनुष्यों का देवपुत्रों के साथ भ्रातृत्व कैसे हो सकता है? आप तो वही पुराना राग आलाप रहे हैं। इस विषय की चर्चा भी न कीजिए।

वासुदेव—दुर्योधन, अर्जुन के पराक्रम को तुम नहीं समझ रहे हो। उसने युद्ध द्वारा शंकर को भी प्रसन्न कर लिया है। इन्द्रादि भी जिसके पराक्रम की नित्य

सन्ति। स महावीरो देवेन्द्रार्त्तिकारान् निवात-कवचान् नाम दैत्यान् लीलयैव व्यनाशयत्। एक एव च विराड्-नगरे भीष्मादीन् महारथिनोऽजयन्। किं बहुना :—

दातुमर्हसि मद्वाक्याद् राज्यार्धं धृतराष्ट्रज !
अन्यथा सागरान्तां गां हरिष्यन्ति हि पाण्डवाः ॥

दुर्योधनः—कथं कथं हरिष्यन्ति हि पाण्डवाः? भोः परुष-वचन-दक्ष! शृणु तावत्—यदि युद्धे भीमरूपो मारुतोऽपि मां प्रहरति, साक्षात् अर्जुनरूपेण च इन्द्रश्च प्रहरति, तथापि त्वद्वचोभिः तृणमपि न दास्ये, किं पुनः राज्यार्धम्।

वासुदेवः—एवमेवास्तु। न वयमनुक्तसंदेशाः गन्तुमिच्छामः। तदाकर्ण्यतां युधिष्ठिरस्य सन्देशः—

शठ, बान्धव-निःस्नेह, काम, पामर, पिङ्गल !
त्वदर्थात् कुरुवंशोऽयमचिरान्नाशमेष्यति ॥

भो भो राजानः! गच्छामो वयं तावत्। ( इति निर्गच्छति )

---

प्रशंसा करते हैं। उस महावीर ने इन्द्र को कष्ट देने वाले निवातकवच संज्ञक दैत्यों को खिलवाड़ ही में नष्ट कर दिया। विराट नगर में भीष्म आदि महारथियों को अकेले ही जीत लिया। अधिक क्या—

'हे दुर्योधन ! मेरे कहने से आधा राज्य दे दो, अन्यथा पाण्डव सागरपर्यन्त सम्पूर्ण पृथ्वी तुमसे छीन लेंगे।'

दुर्योधन—भला पाण्डव कैसे छीन लेंगे? कठोरवादी, सुन तो सही—यदि युद्ध में भीम रूप में वायु भी मेरे ऊपर प्रहार करें और अर्जुनरूप में साक्षात इन्द्र भी प्रहार करें तब भी तुम्हारे कहने से मैं एक तिनका भी नहीं दूँगा, फिर आधे राज्य का कहना ही क्या?

वासुदेव—ऐसा ही हो। मैं बिना संदेशकहे जाना नहीं चाहता हूँ। इसलिए युधिष्ठिर का संदेश सुनो—

'दुष्ट, भाइयों के प्रेम से रहित, स्वार्थी और नीच दुर्योधन ! तुम्हारे कारण यह कुरुवंश शीघ्र ही नष्ट हो जायगा।'

हे राजाओ ! अब हम चल रहे हैं। ( चले जाते हैं )

# दारिद्र्य—दुःखम्

## ( मृच्छकटिकात् )

### शूद्रकः

### ( ई० पू०—२०० )

[ अयमधस्तनः सन्दर्भः महाकवेः शूद्रकस्य मृच्छकटिकनामधेयात् नाटकात् उद्धृतः। अयं हि कविः भास-कालिदास-परवर्ती। इदं नाटकं भासस्य चारुदत्तेति-नामधेयस्य अपूर्णस्य चतुरङ्कात्मकस्यैव कथामादाय रचितम्। अतः अत्र साम्यं दृश्यते स्पष्टमेवोभयोः। पूर्वं धनिकः पश्चाद् दरिद्रः चारुदत्तः ऊर्ध्वमालोक्य सनिर्वेदं यावद् निःश्वसिति तावत् विदूषकः प्रविश्य ]—

विदूषकः—एष आर्य चारुदत्तः। तद् यावत् साम्प्रतमुपसर्पामि। ( उपसृत्य ) स्वस्ति भवते। वर्धतां भवान्।

चारुदत्तः—अये सर्वकालमित्र मैत्रेयः प्राप्तः? सखे, स्वागतम्। आस्यताम्।

विदूषकः—भो इदं किं चिन्त्यते?

चारुदत्तः—वयस्य !

सुखं हि दुःखान्यनुभूय शोभते,
घनान्धकारेष्विव दीप-दर्शनम्।
सुखात्तु यो याति नरो दरिद्रतां,
धृतः शरीरेण मृतः स जीवति॥

---

दरिद्रता का दुःख

विदूषक—ये आर्य चारुदत्त हैं? तो उनके पास चलूं। ( पास जाकर ) आपका कल्याण हो। आपकी वृद्धि हो।

चारुदत्त—अरे सब समय के साथी मैत्रेय आए हैं? मित्र स्वागत है। बैठिए।

विदूषक—यह क्या सोच रहे हैं।

चारुदत्त—मित्र !

'दुःख का अनुभव कर लेने पर सुख उसी प्रकार अच्छा लगता है जैसे घने अंधकार में दीपक का दिखाई पड़ना। किन्तु जो व्यक्ति सुख भोगने के बाद दरिद्र हो जाता है वह शरीर धारण करते हुए भी मरा हुआ सा जीवित रहता है।'

विदूषकः—भो वयस्य। मरणाद् दारिद्र्याद् वा कतरत्ते रोचते ?

चारुदत्तः—वयस्य !

दारिद्र्यान्मरणाद्वा मरणं मम रोचते न दारिद्र्यम्।
अल्पक्लेशं मरणं दारिद्र्यमनन्तकं दुःखम् ॥

विदूषकः—भो वयस्य ! अलं सन्तापितेन। प्रणयिजनेषु सङ्क्रामित-विभवस्य सुर-जन-पीत-शेषस्य प्रतिपच्चन्द्रस्येव परिक्षयोऽपि ते रमणीयः।

चारुदत्तः—न मम अर्थान् प्रति दैन्यम्। पश्य—

एतत्तु मां दहति यद् गृहमस्मदीयं
क्षीणार्थमित्यतिथयः परिवर्जयन्ति।
संशुष्कसान्द्रमदलेखमिव भ्रमन्तः,
कालात्यये मधुकराः करिणः कपोलम् ॥

विदूषकः—भो वयस्य ! एते खलु दास्याः पुत्राः अर्थ-कल्य-वर्त्ताः, वरटा-भीताः इव गोपालदारकाः अरण्ये यत्र यत्र न खाद्यन्ते तत्र तत्र गच्छन्ति।

चारुदत्तः—वयस्य !

---

विदूषक—मित्र मरने और दरिद्रता में तुम्हें कौन अच्छा लगता है ?

चारुदत्त—हे मित्र !

'दरिद्रता और मृत्यु में मुझे मृत्यु अच्छी लगती है न कि दरिद्रता। क्योंकि मरनेमें तो थोड़ी देर कष्ट होता है, किन्तु दरिद्रता तो अनन्तकाल तक दुःखदेती है।

विदूषक—मित्र, दुखी होना व्यर्थ है। प्रेमियों में अपने वैभव को लुटाकर देवताओं से पिये गए चन्द्रमा के समान तुम्हारा इस प्रकार क्षीण ( धनहीन ) हो जाना भी सुन्दर है।

चारुदत्त—धन के प्रति मुझे कोई दुःख नहीं। देखो—

'जैसे मद की रेखा सूख जाने पर भौंरे हाथियों के कपोल पर मँड़राना छोड़ देते हैं वैसे ही मेरे घर को धनहीन समझ कर अतिथियों ने छोड़ दिया है। यही बात मुझे जला रही है।'

विदूषक—मित्र ! वे नीच तो धन के लालची हैं। वे तो बर्रें से डरे हुए ग्वालों के बच्चों जैसे इधर-उधर होते रहते हैं।

चारुदत्त—मित्र !

सत्यं न मे विभवनाशकृताऽस्ति चिन्ता,
भाग्यक्रमेण हि धनानि भवन्ति यान्ति ।
एतत्तु मां दहति नष्टधनाश्रयस्य,
यत् सौहृदादपि जनाः शिथिलीभवन्ति ॥

अपि च—

दारिद्रयाद्ध्रियमेति ह्रीपरिगतः प्रभ्रश्यते तेजसो
निस्तेजाः परिभूयते परिभवान्निर्वेदमापद्यते ।
निर्विण्णः शुचमेति शोकपिहितो बुद्ध्या परित्यज्यते,
निर्बुद्धिः क्षयमेत्यहो निधनता सर्वापदामास्पदम् ॥

विदूषकः—भो वयस्य ! तमेव अर्थ-कल्यवार्त्तं स्मृत्वा अलं सन्तापितेन।

चारुदत्तः—वयस्य, दारिद्र्यं हि पुरुषस्य—

निवासश्चिन्तायाः परपरिभवो वैरमपरं
जुगुप्सा मित्राणां स्वजन-जन-विद्वेष-करणम् ।
वनं गन्तुं बुद्धिर्भवति च कलत्रान् परिभवो
हृदिस्थः शोकाग्निर्न च दहति सन्तापयति च ॥

---

'सचमुच मुझे धननाश की कोई चिन्ता नहीं है, क्योंकि भाग्य के परिवर्तन से धन होता भी है और चला भी जाता है। किन्तु धनहीन व्यक्ति के मित्र भी उसका परित्याग कर देते हैं—यही बात मुझे कष्ट पहुंचाती है।'

और भी—

'दरिद्रता से लज्जा आती है. लज्जा आने से तेज नष्ट हो जाता है और तेज-रहित पराजित हो जाता है. पराजय से उदासीनता उत्पन्न होती है, उदासीनता से शोक होता है और शोकयुक्त व्यक्ति बुद्धिहीन हो जाता है तथा बुद्धिहीन का नाश हो जाता है। इस प्रकार दरिद्रता सभी आपत्तियों का कारण होती है।

विदूषक—मित्र उन धन के लालचियों का स्मरण करके दुखी होना व्यर्थ है।

चारुदत्त—मित्र, दरिद्रता मनुष्य के लिए—

'चिन्ता का निवास है, शत्रुओं से पराजित कराने वाली है, दूसरों से शत्रुता कराने वाली है, मित्रों से घृणा कराती है और अपने लोगों का द्वेषी बना देती है। वन में चले जाने की बुद्धि उत्पन्न करती है। स्त्री से अपमान कराती है। इस प्रकार दरिद्र के हृदय में स्थित शोक की अग्नि जलाकर उसे भस्म नहीं कर बल्कि पीड़ा पहुंचाती रहती है।'

तद् वयस्य, कृतो मम देवताभ्यो बलिः, गच्छ त्वमपि चतुष्पथे मातृभ्यो बलिमुपाहर ।

## शब्दानुशासन-प्रयोजनानि

( पतञ्जलिः )

( ई० पू०—१५० )

[ अयं हि स्वल्पः अंशः पतञ्जलिकृतात् महाभाष्यादुद्धृतः । अत्र शब्दानुशासनस्य—व्याकरणशास्त्रस्य—किं प्रयोजनमिति संक्षेपेण प्रतिपादयति भगवान् भाष्यकारः पतञ्जलिः ।

कानि पुनः शब्दानुशासनस्य प्रयोजनानि ? रक्षोहागमलघ्वसन्देहाः प्रयोजनम् । रक्षार्थं वेदानाम् अध्येयं व्याकरणम्, लोपागमवर्णविकारज्ञो हि सम्यग् वेदान् परिपालयिष्यति । ऊहः खल्वपि, न सर्वैः लिङ्गैः न सर्वाभिः विभक्तिभिः वेदे मन्त्राः निगदिताः । ते च अवश्यं यज्ञगतेन पुरुषेण यथायथं विपरिणमयितव्याः । तान् न अवैयाकरणः शक्नोति यथायथं विपरिणमयितुं, तस्माद् अध्येयं व्याकरणम् । आगमः खलु अपि भवति—ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति । प्रधानञ्च षडङ्गेषु व्याकरणं, प्रधाने च कृतो यत्नः फलवान् भवति ।

---

इसलिए मित्र ! मैंने देवताओं को बलि दी है, जाओ तुम भी चौराहे पर मातृकाओं को बलि दे आओ ।

### व्याकरण का प्रयोजन

फिर व्याकरण के क्या प्रयोजन हैं ? रक्षा, ऊह, आगम, लघु और असन्देह ये प्रयाजन हैं । वेदों की रक्षा के लिए व्याकरण पढ़ना चाहिए । लोप, आगम और वर्णविकारों को जानने वाला ही पूर्ण रूप से वेदों का पालन करेगा । ऊह भी है । वेद में मंत्र सभी लिंगों और सभी विभक्तियों द्वारा नहीं कहे गए हैं । यज्ञ करते समय पुरुषों द्वारा वे योग्यतानुसार अवश्य ही ठीक-ठीक उच्चरित होने चाहिए । उन्हें व्याकरण न जानने वाला ठीक-ठीक नहीं उच्चारण कर सकता । इसलिये व्याकरण का अध्ययन करना चाहिए । आगम भी होता है । ब्राह्मण का निःस्वार्थ धर्म-छहों अंगों के साथ वेद पढ़ना और उसे समझना है । छहों में प्रधान व्याकरण है । अतः प्रधान में किया हुआ प्रयत्न सफल होता है ।

लघ्वर्थं च अध्येयं व्याकरणम्। ब्राह्मणेन अवश्यं शब्दाः ज्ञेयाः इति। न चान्तरेण व्याकरणं लघुना उपायेन शब्दाः शक्याः विज्ञातुम्।

असन्देहार्थं चापि अध्येयं व्याकरणम्। याज्ञिकाः पठन्ति स्थूलपृषतीम् आग्निवारुणीम् अनड्वाहीमालभेत इति। तस्यां सन्देहः—स्थूला चासौ पृषती च स्थूलपृषती, स्थूलानि वा पृषन्ति यस्याः सा इयं स्थूलपृषती इति तां न अवैयाकरणः स्वरतः अध्यवस्यति। यदि पूर्वपदप्रकृतिस्वरत्वं ततो बहुव्रीहिः। अथ समासान्तोदात्तत्वं ततः तत्पुरुषः इति।

---

## अंगुलीयकप्राप्तिः
## अभिज्ञानशाकुन्तलात्
## कालिदासः
### ( ई० पू० प्रथम शताब्दी )

[ राज्ञा दुष्यन्तेन शकुन्तलायै दत्तं निजस्मारकस्वरूपम् अंगुलीयकं तस्याः हस्तात् नद्यां पतितम्। तच्च केनचित् मत्स्येन खादितम्। स च मत्स्यः केनचित् निषादेन धृतः खण्डशः कृतश्च। तस्मिन् खण्डशः क्रियमाणे तस्य उदरात् तद् अंगुलीयकं निःसृतम्। तदादाय गच्छन् धीवरः राजपुरुषैः चौर इति कृत्वा धृतः राज्ञे निवेदितश्च। ]

(ततः प्रविशति नागरिकः श्यालः, पश्चात् बद्धं पुरुषम् आदाय रक्षिणौ च)

---

'लघु' के लिए भी व्याकरण पढ़ना चाहिए। ब्राह्मण को अवश्य शब्दों का ज्ञान करना चाहिए। व्याकरण के अतिरिक्त अन्य किसी लघु उपाय से शब्द नहीं जाने जा सकते।

असन्देह के लिए भी व्याकरण पढ़ना चाहिए। यज्ञ कराने वाले पढ़ते हैं 'स्थूलतृषतीम् आग्निवारुणीम् अनड्वाहीम् आलमेत' इसमें सन्देह होता है— स्थूला चासौ तृषती, स्थूलानि वा पृषन्ति यस्याः सा इयम् स्थूलपृषती' इसे व्याकरण न जानने वाला स्वर से नहीं कह सकता। यदि पूर्व पद-प्रकृति-स्वरत्व है तो बहुव्रीहि है, यदि समासान्त में उदात्त है तो तत्पुरुष है।

मुद्रा का मिलना

(इसके पश्चात् कोतवाल श्याल और उसके पीछे बंधे हुए एक पुरुष को लिए हुए दो सिपाही आते हैं।

रक्षिणौ—( पुरुषं ताडयित्वा ) कुम्भीरक ! कथय कुत्र त्वया एतद् मणिबन्धनोत्कीर्णनामधेयं राजकीयम् अंगुलीयकं समासादितम् ?

पुरुषः—(भीतिं नाटयित्वा) प्रसीदन्तु भावमिश्राः ! अहं नेदृशकर्मकारी।

प्रथमः—तत् किं त्वं शोभनः ब्राह्मणः इति कृत्वा राज्ञा प्रतिग्रहः दत्तः।

पुरुषः—शृणुत इदानीम्। अहं शक्रावतारग्रामवासी धीवरः।

द्वितीयः—पाटच्चर (चौर !) किमस्माभिः जातिः पृष्टा ?

श्यालः—कथयतु सर्वमनुक्रमेण। मा एनमन्तरा प्रतिबधान।

उभौ—यद् आर्यपुत्रं आज्ञापयति। 'कथय'।

पुरुषः—अहं जालोद्गालादिभिः मत्स्यबन्धनोपायैः कुटुम्बभरणं करोमि।

श्यालः—(विहस्य) विशुद्धः इदानीमस्याजीवः।

पुरुषः—
सहजं किल यद् विनिन्दितं
नहि तत्कर्म विवर्जनीयकम्।
पशुमारणकर्मदारुणः
अनुकम्पामृदुरेव श्रोत्रियः ॥

---

दोनों सिपाही—(पुरुष को मारकर) चोट्टे ! बता तो सही यह मणियुक्त और राजा के नाम से अंकित अँगूठी तुझे कहाँ मिली ?

पुरुष ( भय का अभिनय करके ) आप लोग प्रसन्न हों। मैं ऐसा काम ( चोरी ) करनेवाला नहीं हूँ।

पहला—तो क्या तुम्हें उत्तम ब्राह्मण समझ कर राजा ने दान कर दिया है ?

पुरुष—अब सुनिए—मैं शक्रावतार गाँव का रहने वाला धीवर हूं।

दूसरा—चोट्टे ! क्या हम लोग तेरी जाति पूछ रहे हैं ?

श्याल—उसे क्रमपूर्वक सभी बातें कहने दो, बीच में टोको मत।

दोनों—जैसी आर्यपुत्र की आज्ञा। 'कहो'।

पुरुष—मैं जाल और कटिया द्वारा मछली फँसाकर अपने परिवार का पोषण करता हूँ।

श्याल—(हँस कर) इसकी जीविका का ढंग तो बड़ा विशुद्ध है ?

पुरुष—'जो कर्म जिसकी वंशपरंपरा से आ रहा हो वह निन्दित होते हुए भी उसके द्वारा नहीं छोड़ने योग्य होता है। दया से कोमल चित्त होते हुए भी श्रोत्रिय ब्राह्मण यज्ञ में पशु की बलि देते समय निष्ठुर हो जाता है।'

श्यालः—ततः ततः ?

पुरुषः—अथ एकस्मिन् दिवसे रोहितमत्स्यः मया खण्डशः कल्पितः। तस्य उदराभ्यन्तरे इदं रत्नभासुरम् अंगुलीयं दृष्टवान्। ततोऽहं तस्य विक्रयाय दर्शयन् भावमिश्रैः गृहीतः अधुना मारयत वा कुट्टयत वा। अयमेव अस्य आगम-वृत्तान्तः।

श्यालः—जानुक ! विस्रगन्धी, गोधादी, मत्स्यबन्ध एव निःसंशयम्। अंगुलीयकदर्शनमस्य विमर्शनीयम्। राजकुलमेव गच्छामः।

रक्षिणौ—तथा। गच्छ अरे ग्रन्थिभेदक !

( सर्वे परिक्रामन्ति )

श्यालः—सूचक ! इह पुरद्वारे अप्रमत्तौ प्रतिपालयतं माम्। यावदिदम् अंगुलीयकं यथागमनं भर्त्रे निवेद्य ततः शासनं प्रतिगृह्य निर्गच्छामि।

उभौ—प्रविशतु आर्यः, स्वामिप्रसादाय।

( निष्क्रान्तः श्यालः )

सूचकः—जानुक ! चिरायते खलु आवुत्तः।

---

श्याल—हाँ, तब ?

पुरुष—एक दिन मैंने रोहू मछली को कई टुकड़ों में काटा। उसके पेट में इस बहुमूल्य रत्नजटित अँगूठी को देखा। इसके पश्चात् इसे बेचने के लिए दिखाते हुए आप लोगों द्वारा पकड़ लिया गया। अब मारिए या काटिए। यही इसके मिलने की कथा है।

श्याल—जानुक ! इसमें से बिसायँध मांस की गन्ध आ रही है अतः इस अँगूठी के मिलने पर पूर्ण विचार होना चाहिए। चलो राजदरबार में ही चलें।

दोनों सिपाही—ठीक है। चल रे गिरहकट !

( सब चलते हैं )

श्याल—सूचक ! तुम दोनों इस द्वार पर सावधानी से मेरी प्रतीक्षा करो तब तक मैं इस अँगूठी के मिलने का समाचार स्वामी से कह कर उनकी आज्ञा लेकर आता हूँ।

दोनों—ठीक है, आप स्वामी को प्रसन्न करने के लिए भीतर जाइये।

( श्याल चला जाता है )

सूचक—जानुक ! स्वामी देर कर रहे हैं।

जानुकः—ननु अवसरोपसर्पणीया राजानः ।

सूचकः—जानुक ! स्फुरतः मे हस्तौ अस्य वधार्थम् । सुमनसःपिनद्धम् ।

पुरुषः—नार्हति भावः अकारणमारणः भवितुम् ।

जानुकः—(विलोक्य) एषोऽस्माकं स्वामी पत्रहस्तः गृहीत्वा राजशासनमागच्छति । शुनः मुखं वा द्रक्ष्यसि, गृध्रबोलिर्वा भविष्यसि । सूचक ! मुच्यतामेष जालोपजीवी । उपपन्नः किल अस्य अङ्गुलीयस्य आगमः आजीवश्चास्मै दत्तः भर्त्रा ।

सूचकः—यथा भणति भवान् ।

जानुकः—एष यमसदनं प्रविश्य प्रतिनिवृत्तः ।

( पुरुषं मुक्तबन्धनं करोति )

पुरुषः—(श्यालं प्रणम्य) भर्तः ! कीदृशो मे आजीवः ?

श्यालः—एष भर्त्रा अंगुलीयकमूल्यतुल्यः पारितोषिको दत्तः । (इति पुरुषाय धनं प्रयच्छति)

पुरुषः—(सप्रणामं प्रतिगृह्य ) अनुगृहीतोऽस्मि ।

---

जानुक—राजा से अवसर पाकर ही तो कुछ कहा जाता है ।

सूचक—जानुक ! इसे मार डालने और वध्य चिन्ह पहनाने को मेरे हाथ फड़क रहे हैं ।

पुरुष—आपको व्यर्थ ही इसे नहीं मारना चाहिए ।

जानुक—( देख कर ) ये हमारे स्वामी हाथ में राजा का आज्ञापत्र लिए आ रहे हैं । या तो कुत्ते का मुंह देखेगा अथवा गिद्धों की वलि होगा ।

श्याल—( आकर ) सूचक ! इस धीवर को छोड़ दो । इस अँगूठी के मिलने की बात इसने ठीक-ठीक बताई है । स्वामी ने इसे उपहार दिया है ।

सूचक—जैसी आपकी आज्ञा ।

जानुक—यह यमलोक में पहुंच कर फिर लौट आया ।

( पुरुष को बन्धन से मुक्त कर देता है )

पुरुष—( श्याल को प्रणाम करके ) स्वामी ! मुझे कैसा उपहार दिया है ?

श्याल—स्वामी ने अँगूठी के मूल्य के बराबर यह पारितोषिक दिया है ।

( पुरुष को धन देता है )

पुरुष—( प्रणाम करते हुए लेकर ) मैं अनुगृहीत हुआ ।

सूचकः—एष नाम अनुग्रहः यत् शूलात् अवतार्य हस्तिस्कन्धे स्थापितः।

जानुकः—आवुत्त ! परितोषं कथयति भवान् । तत् तेनाङ्गुलीयकेन भर्तुः सम्मतेन भवितव्यम् ।

श्यालः—न तस्मिन् महार्हं रत्नं भर्तुः बहुमतमिति तर्कयामि । तस्य दर्शनेन भर्तुः अभिमतः जनः कश्चित् स्मारितः । मुहूर्त्तं प्रकृतिगम्भीरोऽपि पर्युत्सुकनयन् आसीत् ।

सूचकः—सेवितं नाम आयुत्तेन ।

श्यालः—ननु भण अस्य मत्स्यशत्रोः कृते । ( इति पुरुषं सतिरस्कारं पश्यति)

पुरुषः—भट्टारक ! इतोऽर्धं युष्माकं सुमनो मूल्यं भवतु ।

जानुकः—एतद् । युज्यते ।

श्यालः—धीवर ! महत्तरस्त्वं प्रियवयस्यः इदानीं संवृत्तः ।

( इति निष्कान्ताः सर्वे )

---

सूचक—स्वामी ने तो इस पर ऐसा अनुग्रह किया मानो शूली से उतार कर हाथी पर बिठा दिया हो ।

जानुक—आर्यपुत्र ! आप इसे इनाम कहते हैं। तो स्वामी के लिए यह अँगूठी विशेष आदरणीय है ।

श्याल—इस अँगूठी में महान रत्न हैं इसलिए आदरणीय नहीं है । मैं समझता हूँ कि इसके दर्शन द्वारा स्वामी को कोई प्रिय व्यक्ति याद आ गया है, क्योंकि स्वभाव से गंभीर होते हुए भी क्षण भर के लिए स्वामी अत्यन्त उत्कण्ठित हो गए थे ।

सूचक—तव तो अपने स्वामी को प्रसन्न कर दिया ।

श्याल—इस धीवर के लिए ऐसा कहो। ( अर्थात् मैंने नहीं इस धीवर ने किया है)

पुरुष—इसमें का आधा आप लोगों के शराब के लियें होना चाहिये ।

जानुक—यही उचित है ।

श्याल—धीवर ! इस समय तुम हमारे सबसे बड़े मित्र हो गए हो ।

( सब चले जाते हैं )

# पञ्चतन्त्रम्

श्रीविष्णुशर्मा

( ई० द्वितीयशतकम् )

अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम्। तत्र सकलार्थिकल्पद्रुमः, प्रवर-नृप-मुकुट-मणि-मरीचि-चर्चित-चरणयुगलः सकलकला-पारङ्गतः अमरशक्तिर्नाम राजा बभूव। तस्य त्रयः पुत्राः परमदुर्मेधसः वसुशक्तिः, उग्रशक्तिः, अनेकशक्तिश्चेति नामानो बभूवुः।

अथ राजा तान् शास्त्रविमुखानालोक्य सचिवानाहूय प्रोवाच—भोः, ज्ञातमेतद् भवद्भिः यत् ममैते पुत्राः शास्त्रविमुखाः विवेकरहिताश्च, तदेतान् पश्यतो मे महदपि राज्यं न सौख्यमावहति। अथवा साध्विदमुच्यते—

अजात-मृत-मूर्खेभ्यो मृताजातौ सुतौ वरम्।
यतस्तौ स्वल्प-दुःखाय यावज्जीवं जडो दहेत्॥
कोऽर्थः पुत्रेण जातेन यो न विद्वान् न भक्तिमान्।
किं तया क्रियते धेन्वा या न सूते न दुग्धदा॥

---

दक्षिण देश में महिलारोप्य नाम का एक नगर था। वहाँ सभी याचकों के कल्पवृक्ष, श्रेष्ठ राजाओं की मुकुटमणि की किरणों से पूजित चरणवाले, सभी कलाओं के ज्ञाता अमरशक्ति नामवाले राजा हुए। उनके वसुशक्ति, उग्रशक्ति और अनेकशक्ति नामवाले तीन महान् मूर्ख लड़के हुए।

राजा ने उन्हें शास्त्र-ज्ञान से रहित देखकर मन्त्रियों को बुलाकर कहा—आप लोग जानते हैं कि मेरे ये लड़के शास्त्ररहित और ज्ञानहीन हैं। इन्हे देख कर मैं इतने बड़े राज्य से भी सुखी नहीं हो पा रहा हूं। यह बिलकुल ठीक कहा गया है कि—

'पुत्र का पैदा ही न होना, होकर मर जाना तथा मूर्ख होकर जीवित रहना इन तीनों में मर जाना अथवा पैदा ही न होना अच्छा है, क्योंकि इन दोनों से तो थोड़ा ही कष्ट होता है किन्तु मूर्ख तो जब तक जीता रहता है कष्ट पहुंचाता रहता है।'

'उस पुत्र के पैदा होने से कोइ लाभ नहीं जो न तो विद्वान् है न तो भक्त ही। भला उस गाय से क्या लाभ जो न बच्चा ही देती है न दूध ही।'

तदेतेषां मम पुत्राणां यथा बुद्धि-प्रकाशो भवति तथा कोऽप्युपायोऽनुष्ठीयताम्, अत्र च मद्दत्तां वृत्तिं भुञ्जानानां पण्डितानां पञ्चशती तिष्ठति, ततो यथा मनोरथाः सिद्धिं यान्ति तथाऽनुष्ठीयताम्।

तत्रैकः प्रोवाच—देव! द्वादशभिः वर्षैः व्याकरणं श्रूयते, ततो धर्मशास्त्राणि मन्वादीनि, अर्थशास्त्राणि चाणक्यादीनि, कामशास्त्राणि वात्स्यायनादीनि, एवं च ततो धर्मार्थकामशास्त्राणि ज्ञायन्ते। ततः प्रतिबोधनं भवति।

तन्मध्यतोऽपरः सुमतिनामा आह—अशाश्वतोऽयं जीवितव्यविषयः प्रभूत-कालज्ञेयानि शब्दशास्त्राणि, तत् संक्षेपमात्रं शास्त्रं किञ्चिदेषां प्रबोधनार्थं चिन्त्यताम् इति।

उक्तं च—

अनन्तपारं किल शब्दशास्त्रं स्वल्पं तथायुर्बहवश्च विघ्नाः।
सारं ततो ग्राह्यमपास्य फल्गु हंसैर्यथा क्षीरमिवाम्बुमध्यात्॥

तदत्रास्ति विष्णुशर्मा नाम ब्राह्मणः सकलशास्त्रपारङ्गतः, छात्रसंसदि

---

इसलिए मेरे इन पुत्रों की बुद्धि जिस प्रकार बढ़े, आप लोग वैसा ही कोई उपाय कीजिए। यहां मेरे द्वारा दी गई जीविका का उपभोग करनेवाले पांच सौ पण्डित हैं। इसलिये जैसे मेरी अभिलाषा पूरी हो आप लोग वैसा ही करें।

उनमें से एक ने कहा—राजन्! १२ वर्ष में व्याकरण पढ़ा जाता है, इसके पश्चात् मनु आदि के धर्मशास्त्र, फिर चाणक्यादि के राजनीतिशास्त्र और फिर वात्स्यायन आदि के कामशास्त्र। इस प्रकार धर्म और कामशास्त्र का ज्ञान होता है। इसके पश्चात् विवेक होता है।

उनमें से सुमति नामवाले दूसरे ने कहा—जीवन बहुत ही थोड़े समय का है और शब्दशास्त्र का ज्ञान बहुत समय में होता है। इसलिए संक्षिप्त रूप से इन्हें शास्त्र का ज्ञान हो जाय—ऐसा विचार कीजिए। कहा भी है—

'शब्दशास्त्र का पार पाना अगम्य है। आयु थोड़ी है और विघ्न बहुत अधिक हैं। इसलिए तत्त्वहीन वस्तुओं को छोड़ कर तत्त्व को उसी प्रकार ग्रहण कर लेना चाहिए जैसे हंस जल के बीच से दूध ग्रहण कर लेता है।'

इसलिए सम्पूर्ण शास्त्रों में प्रवीण और विद्यार्थियों में प्रसिद्ध एक विष्णुशर्मा

लब्धकीर्तिः तस्मै समर्पयत्वेतान्, स नूनं द्राक् प्रबुद्धान् करिष्यतीति ।

स राजा तदाकर्ण्य विष्णुशर्माणमाहूय प्रोवाच—भो भगवन् ! मद्-नुग्रहार्थमेतान् अर्थशास्त्रं प्रति द्राग् यथानन्यसदृशान् विदधासि तथा कुरु । तदहं त्वां शासन-शतेन योजयिष्यामि ।

अथ विष्णुशर्मा तं राजानमूचे—देव ! श्रूयतां मे तथ्यवचनम्; नाहं विद्या-विक्रयं शासन-शतेनापि करोमि, पुनरेतांस्तव पुत्रान् मासषट्केन यदि नीतिशास्त्रज्ञान् न करोमि ततः स्वनामत्यागं करोमि । नाहम् अर्थ-लिप्सुरेवं ब्रवीमि यतः मम अशीतिवर्षस्य, व्यावृत्तसर्वेन्द्रियार्थस्य न किञ्चिदर्थेन प्रयोजनम्; किन्तु त्वत्प्रार्थना-सिद्ध्यर्थं सरस्वती-विनोदं करिष्यामि ।

अथासौ राजा तां ब्राह्मणस्य असम्भाव्यां प्रतिज्ञां श्रुत्वा ससचिवः प्रहृष्टो विस्मयान्वितः तस्मै सादरं तान् कुमारान् समर्प्य परां निर्वृतिमा-जगाम । विष्णुशर्मणापि तानादाय तदर्थं मित्रभेद-मित्रप्राप्ति-काकोलू-

---

नामक ब्राह्मण यहाँ रहता है । आप इन्हें उसे ही समर्पित करें । अब अवश्य ही इन्हें शीघ्र बुद्धिमान् बना देगा ।

राजा ने ऐसा सुनकर विष्णुशर्मा को बुलाकर कहा—भगवन् ! मेरे ऊपर कृपा करके इन्हें शीघ्र ही अर्थशास्त्र में निपुण कर दीजिए । मैं आपको सैकड़ों जागीरें दूँगा ।

विष्णुशर्मा ने उस राजा से कहा—राजन् ! मेरी सत्य बातें सुनिए । मैं सैकड़ों जागीरों पर भी विद्या नहीं बेचूँगा । किन्तु तुम्हारे इन पुत्रों को यदि ६ मास के ही भीतर नीतिशास्त्र का ज्ञाता न बना दूँ तो मैं अपने नाम का परि-त्याग कर दूँगा । मैं धन का लालची बन कर ऐसा नहीं कह रहा हूँ, क्योंकि मेरी अवस्था अस्सी वर्ष की हुई, सम्पूर्ण इन्द्रियां अपने विषयों से विमुख हो चुकी हैं, अतः मुझे धन की कोई इच्छा नहीं । किन्तु आपकी प्रार्थना सफल करने के लिये सरस्वती का विनोद करूँगा ।

राजा उसकी असंभव प्रतिज्ञा सुनकर मंत्रियों-सहित अत्यन्त प्रसन्न और आश्चर्य-चकित हुआ तथा आदर के साथ उसे कुमारों को सौंप कर उसने शान्ति की सांस ली । विष्णुशर्मा ने उनके लिए मित्रभेद, मित्रप्राप्ति, काकोलूकीय,

कीय-लब्धप्रणाश-परीक्षितकारकाणीति पञ्चतन्त्राणि रचयित्वा पाठितास्ते राजपुत्राः, तेऽपि तान्यधीत्य मासषट्केन यथोक्ताः संवृत्ताः। ततः प्रभृति एतत् 'पञ्चतन्त्रम्' नाम नीतिशास्त्रं बालावबोधनार्थं भूतले संप्रवृत्तम्।

---

## शिबेः उपाख्यानम्

(पञ्चतन्त्रात्)

अस्ति राजा शिबिर्नाम सकल-भूपाल-मौलि-माला-चर्चित-चरणः परमकारुणिकः सकलार्थि-जन-सम्पादित-मनोरथः। तस्य अनन्य-सदृश्या दानशीलतया यशः त्रिदिवमारुरोह।

अथ कदाचिदाखण्डलश्चिन्तयामास—नास्ति दानशीलः शिबिना तुल्यः। तत् कोऽस्याभिप्रायः, कियद्वा सत्त्वमस्य इति जिज्ञासया धर्म-माहूय स्वयं कपोतोऽभवत्। धर्मश्च श्येनः कपोतस्य पृष्ठतः त्वरितगतिः अभिभवितुं प्रवृत्तः।

अथ तस्य राज्ञः सुखासनस्थस्य प्रभातसमये एव आस्थानगतस्य

---

लब्धप्रणाश और अपरीक्षितकारक नामवाले पाँच तंत्रों की रचना करके उन्हें पढ़ाया। वे राजकुमार भी उन्हें पढ़कर छः मास में ही विद्वान् बन गए। उसी समय से पंचतंत्र नाम का यह नीतिशास्त्र बालकों के ज्ञान के लिए पृथ्वी पर प्रसिद्ध हुआ।

---

### राजा शिबि की कहानी

सम्पूर्ण राजाओं की मस्तक-माला से पूजित चरणवाला, सभी याचकों की अभिलाषाओं को पूरा करने वाला परमदयालु, शिबि नाम का एक राजा था। उसकी महान दानशीलता से उसका यश स्वर्ग तक पहुँच गया।

एक बार इन्द्र ने विचार किया—शिबि के समान दानी कोई नहीं है। इसलिए इसकी क्या अभिलाषा है और इसमें कितनी महत्ता—यह जानने की इच्छा से धर्म को बुलाया और वह स्वयं कबूतर बन गया। धर्म बाज बनकर उस कबूतर के पीछे बड़ी तेजी से आक्रमण करने के लिए दौड़ा।

राजा प्रातःकाल के समय सभा में सुखपूर्वक बैठे थे। उसी समय काँपता

असौ कपोतः कम्पमानो भय-तरल-नेत्र-तारकः करुण-रसितमाविष्कुर्वन् चरणसमीपे सहसैव सन्निपतितः, प्रोवाच च भयगद्गदया गिरा—'राजन्! शरणागतोऽस्मि ते, परित्रायस्व मां श्येनात्।' अथ श्येनोऽपि राज्ञः पुरतः पपात। सोऽपि राजन्! मुञ्च-मुञ्च, क्षुधातुरस्य मे भक्ष्यं समर्पयस्वेति प्रोच्चैरुवाच। कपोत आह—'देव! शरणागतस्य मे परित्राणमर्हसि कर्तुम्, स्वशरीराण्यपि साधवो नित्यं शरणागतार्थं त्यजन्ति, न शरणागतम्।' श्येनोऽब्रवीत्—'राजन्! सकलमनोरथ--दाता किल श्रूयसे। अतो मे भक्ष्यमेनं दातुमर्हसि। प्राणसंशयमापन्नोऽस्मीति।'

असावपि राजा जातकरुणः कथमेतदिति संभ्रान्तो दोलारूढ इव सान्त्वयन् श्येनमाह—'नैष सतां पन्थाः शरणागतत्यागः, तदहं मांसमन्यदेव ते दापयामि, यावत् तृप्तिमवाप्नोषीति'। श्येन आह—'न वयं परहतपिशितभुजः, स्वयं जीवतः मांसानि उष्णरुधिर-कललानि आस्वादयामहे, किन्तु यावन्मात्रमिदं कपोतमांसं तुलितं भवति तावन्मे स्वमांसं प्रयच्छेति।'

---

हुआ, भय के कारण पुतलियों को इधर-उधर घूमाता हुआ तथा लक्षण ध्वनि करता हुआ यह कबूतर राजा के चरणों के पास आ गिरा और भयभीत वाणी में बोला—'राजन् 'मैं आपकी शरण आया हूँ। इस बाज से मेरी रक्षा कीजिए।' बाज भी राजा के सामने आया और उच्च स्वर से बोला—'राजन्! छोड़िए, छोड़िए, मुझे भूखे का भोजन मुझे दीजिए।' कबूतर ने कहा—'देव! मुझे शरणागत की रक्षा कीजिए। सज्जन लोग शरणागत के लिए अपना शरीर दे देते हैं किन्तु शरणागत को नहीं छोड़ते।' बाज ने कहा—'आप सभी अभिलाषाओंको पूरा करने वाले हैं। अतः आप मेरा वह भोजन दे दीजिए। मैं भूख के कारण मरा जा रहा हूँ।'

राजा भी अत्यन्त करुणा से भर गए और यह क्या घटना है, इस विषय में झूले पर जैसे आश्चर्यचकित होकर ( दुविधा में पड़कर ) उस बाज को संतोष देते हुए बोले—'शरणागत का परित्याग करना सज्जनों का मार्ग नहीं है इसलिए मैं तुम्हें दूसरा मांस दिलाऊँगा जिससे तुम्हारी तृप्ति हो जाय।' बाज ने कहा—'मैं दूसरे द्वारा मारे गए मांस को नहीं खाता। मैं जीवित प्राणी के मांस और गरम खून का स्वाद लेता हूँ, तौल में जितना इस कबूतर का मांस हो, उतना ही अपना मांस मुझे दीजिए।'

बाढम्, दातास्मीति राज्ञि प्रतिपन्ने हाहाकारः समभूद् भूभुजाम्—'देव मा साहसं कार्षीः, एष श्येनरूपी राक्षसः त्वद्विनाशहेतुः आगतः इति।' एवमार्त्तिनादे वर्तमाने तुलां कपोतः समारोपितः। कक्षां तत्समां कृत्वा स्वमांसम् अङ्गावयवात् उत्कृत्य आरोपितं न च कपोतसमं भवत्येव। अशेषावयव-विलुप्त-पिशितः शिबिर्यदा कपोतस्य न तुल्यतां संजगाम तदा 'नमः सर्वविदे धर्माय' इति कृत्वा स्वयमेव तुलामधिरूढः।

अथ दिवि देवदुन्दुभयः प्रणेदुः। अविरल-कुसुम-वृष्टि-सारः समीरणः प्रववौ। साधु साध्विति दशस्वपि दिक्षु वाचो विचेरुः। अत्रान्तरे धर्मपाकशासनौ प्रकटितरूपौ तं राजानमाहतुः—'साधु महीनाथ! शोभनस्ते अतिनिपुणः प्राणिधर्मः विज्ञातः परमार्थतः त्वमेव जिज्ञासितः। तदिदं शरीरं ते पुरातनमिवास्तु, कोशमक्षयम्, धर्मे च ते सदा मतिः भूतभूतये भवतु' इत्युक्त्वा अन्तर्धानमागतौ।

---

'बहुत अच्छा! मैं दूँगा।' राजा के ऐसा कहने पर राजाओं में हाहाकार मच गया। 'देव ऐसा साहस मत कीजिए। यह बाजरूपी राक्षस आपके विनाश के लिए आया है। इस प्रकार के कोलाहल में कबूतर तराजू पर रखा गया। तराजू के दूसरे पलड़े पर राजा ने अपने शरीर के अंग से मांस काट कर रखा किन्तु वह कबूतर के बराबर नहीं हुआ। जब राजा शिवि शरीर का सम्पूर्ण मांस समाप्त हो जाने पर भी उस कबूतर की समता न कर सके तब 'सर्वज्ञाता धर्म को नमस्कार है' ऐसा कह कर स्वयं तराजू पर चढ़ गए।

इसके पश्चात् स्वर्ग में देवताओं ने दुन्दुभि बजाना पारम्भ किया और निरंतर फूलों की वर्षा करने वाली हवा चलने लगी। दसों दिशाओं में 'साधु साधु' का शब्द फैल गया। इसी बीच धर्म और इन्द्र ने प्रकट होकर राजा से कहा—'राजन्! धन्य हो, समझ में आ गया कि तुम्हारा प्राणिधर्म सुन्दर एवं प्रशंसनीय है। वस्तुतः हम तुम्हें ही जानना चाहते थे। इसलिए तुम्हारा शरीर पहले जैसा हो जाय, तुम्हारा खजाना कभी न चुके और तुम्हारी बुद्धि धर्म तथा प्राणियों के कल्याण में लगी रहे।' एसा कह कर वे दोनों अदृश्य हो गए।

# वर्षा-समय-वर्णनम्

## वासवदत्तातः

## सुबन्धुः ( ई०—६०० )

[ अयं हि गद्यभागः सुबन्धुकविकृतात् वासवदत्तानामकात् गद्यमहाकाव्याद् उद्धृतः । अत्र श्लेषमयैः वाक्यैः कविः वर्षासमयस्य वर्णनं करोति । ]

एकदा तु कतिपयमासापगमे काकली-गायन इव समृद्ध-निम्नगा-नदः, सायन्तन-समय इव नर्त्तित-नील-कण्ठः, कुमार-मयूर इव समारूढ-शरजन्मा, महातपस्वी इव प्रशमित-रजःप्रसरः, तापस इव धृत-जलद-करकः प्रलय-काल इव दर्शितानेक-तरणि-विभ्रमः, निरुपद्रव-कानन-प्रदेश इव घनोत्सुकितसारङ्गः, रेवती-कर-पल्लव इव हलि-धृत-करः, लङ्केश्वर इव समेघनादः, विन्ध्य इव घनश्यामः, समाजगाम वर्षा-समयः ।

---

वर्षा समय-वर्णन

एक बार कुछ मास बीतने के पश्चात् वर्षा ऋतु आई, जिसमें नदियां और नद जल से उसी प्रकार पूर्ण थे जैसे काकली-गायन गम्भीर तानों से परिपूर्ण होता है । उस समय शंकर जी के नृत्य से युक्त संध्याकाल के समान मयूर नृत्य करने लगे । कुमार से अधिष्ठित मोर के समान सरकंडे ( तृणविशेष ) अधिकता से उत्पन्न हो गए । उसने धूल को उसी प्रकार शान्त कर दिया था जैसे कोई बड़ा तपस्वी अपनी राजस प्रवृत्तियों को शान्त कर देता है । वह बादल और ओले उसी तरह धारण किए हुए थी जैसे तपस्वी जल देने वाली कमंडल लिए रहता है । जैसे प्रलयकाल में अनेक सूर्यों के विलास का प्रकाश दिखाई पड़ता है उसी प्रकार नदियों में अनेक नावों का विलास होने लगा । जिस तरह घने जंगल शांत प्रदेश में हरिणों को आनन्दविभोर कर देते हैं उसी प्रकार इस वर्षाकाल के घने बादलों ने चातकों को आनन्दसन्त कर दिया है । यह वर्षाकाल हलधारी कृषकों को उसी प्रकार धैर्य दे रहा था जैसे रेवती के पल्लवों के समान लाल-लाल हाथ बलराम जी को सहारा देते थे । यह वर्षा का समय बादलों के साथ उसी प्रकार गर्जन कर रहा था जैसे रावण अपने पुत्र मेघनाद के साथ गरज रहा था ।

विभिन्न-मेघ-नीलोत्पल-कानने क्रीडासरसीव नभसि, स्मरस्य रत्न-नौकेव, जलदकाल-लक्ष्मी-मातङ्ग-कन्या-नर्तन-रज्जुरिव, नभः, सौध-तोरण-रत्न-मालिकेव, गगन-लक्ष्मी-बन्धुर-रशना-मालेव नभो मन्दार-तरु-सुन्दर-कलिकेव, रतिनखमार्जन-रत्न-शलाकेव, रत्नमयी विलास-यष्टिरिव कुसुमकेतोः इन्द्रधनुर्लता रराज।

अतितृष्णावेगपीत-जलनिधि-जलशंखमालां, वलाकाच्छलाद् उद्वमन्निव अदृश्यत जलधरनिकरः। पीतहरितैः कृष्ण-केदारिका-कोष्ठिकासु समुत्पतद्भिर्जतुशवलैरिव, दर्दुरशिशुकैर्नयद्यूतैरिव विद्युता चिक्रीड वर्षाकालः। रवि-दीप-कज्जल-निचयनिभे निकषोपले इव मेघ-समय-सुवर्णकार-निकषित सुवर्ण-लेखेव तडिदशोभत।

---

यह समय विन्ध्याचल के समान घने काले बादलों से श्याम वर्ण का दिखाई पड़ रहा था।

उस समय मेघों से आच्छादित आकाश में इन्द्रधनुष ऐसा सुशोभित हो रहा था मानो मेघरूपी अनेक नीले कमलों से नील वर्ण वाले आकाशरूपी क्रीडा सरोवर में कामदेव की रत्नमयी नौका दिखाई दे रही हो, अथवा वर्षाकाल की सुन्दरतारूपी चाण्डालकन्या की नृत्य करनेवाली रस्सी हो, अथवा आकाशरूपी महल के वाहरी द्वार पर शोभित रत्नों की माला हो, अथवा आकाशकी शोभारूपी नायिका के कमर की करधनी हो, अथवा आकाशरूपी मन्दार वृक्ष की सुन्दर कली हो, अथवा रति के तखों को साफ करने की रत्नों से निर्मित सलाई हो, अथवा कामदेव की घूमने के समय साथ रहनेवाली रत्नजटित छड़ी हो।

बादलों के नीचे उड़ती हुई बगुलों की पंक्तियाँ ऐसी प्रतीत हो रही थी मानो अत्यन्त प्यास के आदेश में समुद्र का जल पीते समय बादलों ने उसके भीतर रहनेवाले शंखों को भी पी लिया हो जिसे अब वमन करके बाहर निकाल रहा है। उस समय नीले रंग की क्यारीरूपी कोष्ठिकाओं में उछल-उछल कर चलते हुए मेढकों के पीले और हरे बच्चे लाख से बने मोहरों के समान लगते थे मानो वर्षाकाल बिजली के साथ शतरंज खेल रहा हो, काले बादलों के वीच बिजली इस प्रकार शोभित हो रही थी मानो सूर्यरूपी दीपक के धूमसमुह बादलरूपी कसौटी पर वर्षाकालरूपी सुनार ने मोने की रेखा खींच दी हो।

---

# शुक-जन्म-कथा

## बाणभट्टः

## ( ई०—६४० )

[ अधस्तनं गद्यं महाकवि-बाण-भट्टकृतात् 'कादम्बरी' ग्रन्थात् उद्धृतम् । शुकरूपधारी वैशम्पायनः राज्ञः शूद्रकस्य राजसभायां समुपस्थाय आत्मजन्म-वृत्तान्तं कथयति । ]

अथ मुहूर्त्तादिव वैशम्पायनः प्रतीहार्या गृहीत-पञ्जरः कनकवेत्रलता-वलम्बिना किंचिद् अवनतपूर्वकायेन सित-कञ्चुकावच्छन्नवपुषा जरा-धवलित-मौलिना गद्‌गदस्वरेण मन्द-मन्दं सञ्चारिणा विहङ्ग-जाति-प्रीत्या जरत्कलहसेनेव कञ्चुकिना अनुगम्यमानः राजान्तिकमाजगाम। क्षिति-तल-निहित-करतलस्तु कञ्चुकी राजानं व्यज्ञापयत्—'देव ! देव्यो विज्ञा-पयन्ति—देवादेशादेष वैशम्पायनः स्नातः कृताहारश्च देवपाद-मूलं प्रतीहार्या आनीतः' इत्यभिधाय गते च तस्मिन् राजा वैशम्पायनमपृच्छत्—'कच्चिद् अभिमतमास्वादितमभ्यन्तरे भवता किञ्चिद् अशनजातम् ?' इति। स प्रत्युवाच—'देव ! किं वा नास्वादितम् ? आमत्ताकोकिल-

---

शुक-जन्म-कथा

इसके पश्चात् क्षण मात्र में ही प्रतीहारी वैशम्पायन युक्त पिंजड़े को हाथ में लिए राजा के पास पहुंची। उसके पीछे-पीछे एक बूढ़ा ब्राह्मण कञ्चुकी भी था। वह हाथ में सोने से मढ़ी हुई बेंत की छड़ी लिए हुए था, उसका शरीर कमर से ऊपर झुका हुआ था, वह श्वेतवस्त्र धारण किए था, बुढ़ापे के कारण उसके बाल सफेद हो गए थे, वाणी गद्गद हो गई थी और गति अत्यंत मंद थी। उसे उस पक्षी ( वैशम्पायन ) के पीछे देख कर ऐसा प्रतीत होता था मानो पक्षियों के प्रेम के कारण कोई सुन्दर वृद्ध हंस आ रहा हो। उस कञ्चुकी ने पृथ्वी पर हाथ रखते हुए राजा से निवेदन किया—'राजन् ! रानियों ने संदेश दिया है कि आपकी आज्ञा के अनुसार वैशम्पायन को स्नान और भोजन कराकर प्रती-हारी के साथ आप के चरणों में भेज दिया है। ऐसा कह कर उसके चले जाने पर राजा ने वैशम्पायन से पूछा—'क्या आपने रनिवास में अपनी इच्छाके अनु-सार भोज्य पदार्थों का उपयोग कर लिया ?' उसने कहा—'राजन्, मैंने क्या

लोचनच्छविः नील-पाटलः कषाय-मधुरः प्रकाममापीतो जम्बूफल-रसः, खण्डितानि दाडिम-बीजानि, नलिनी-दल-हरिन्ति द्राक्षाफल-स्वादूनि च चूर्णितानि स्वेच्छया प्राचीनामलकीफलानि। किं वा प्रलपितेन बहुना। सर्वमेव देवीभिः स्वयं करतलोपनीयमानम् अमृतायते' इति। एवं वादिनो वचनमाक्षिप्य नरपतिरब्रवीत्—'आस्तां तावत् सर्वम्! अपनयतु नः कुतूहलम्। आवेदयतु भवान् आदितः प्रभृति कार्त्स्न्येन आत्मनः जन्म, कस्मिन् देशे भवान् कथं जातः, केन वा नाम कृतं का ते माता, कस्ते पिता, कथं वेदानामागमः, शास्त्राणां परिचयः, कुतः कलाः आसादिताः, किंहेतुकं जन्मान्तरानुस्मरणम्, उत वरप्रदानम्, अथवा विहङ्ग-वेषधारी कश्चिच्छन्नः निवससि, क्व वा पूर्वमुषितम्, कियद्वा वयः, कथं पञ्जर-बन्धनम्, कथं चाण्डाल-हस्त-गमनम्, इह वा कथमागमनमिति!'

वैशम्पायनस्तु स्वयम् उपजातकुतूहलेन सबहुमानम् अवनिपतिना पृष्टः मुहूर्तमिव ध्यात्वा सादरमब्रवीत्—देव! महती इयं कथा। यदि कौतुकम्, आकर्ण्यताम्—

---

नहीं खाया? मतवाले कोकिल के नेत्रों के समान लाल और नीले खटमिठ्ठे जामुन के रस को भली भाँति पिया है, अनार के बीजों को कुतरा है, कमल के पत्तों के समान हरे और दाखके समान स्वादिष्ट प्राचीन आंवले के फलों को इच्छानुसार खाया है। अधिक कहने से क्या लाभ। रानियों द्वारा स्वयम् अपने हाथों से लाई गई सभी वस्तुएं अमृततुल्य हो गई थीं।' इस प्रकार कहते हुए वैशम्पायन की बात को बीच ही में काट कर राजा ने कहा—'हाँ यह सब तो हुआ। अब आप मेरी जिज्ञासा दूर कीजिए और प्रारंभ से लेकर अपने जन्म की पूरी-पूरी कहानी बताइए। आपका जन्म किस देश में और कैसे हुआ, आप का नामकरण किसने किया, आपके माता पिता कौन हैं, आपने वेदों का ज्ञान कैसे पाया, आपका शास्त्रों से कैसे परिचय हुआ, आपने कलाएँ कहाँ सीखीं, आपको पूर्वजन्म के पुण्य से इतना स्मरण है या किसी ने वरदान दिया है, अथवा आप पक्षी के वेष में छिप कर रहते हैं, पहले आप कहाँ रहते थे, आप की आयु क्या है? आप पिंजड़े में किस प्रकार पड़े, चाण्डाल के हाथों में किस प्रकार आए और आप यहाँ किस अभिप्राय से आए हैं?'

राजा ने जब स्वयं कौतुक के साथ इस प्रकार सम्मान से पूछा तो वैशम्पायन-

अस्ति पूर्वापर-जलनिधि-वेलावलग्ना, मध्यदेशालङ्कारभूता, भुवः मेखला इव, अतिविकच-धवल-कुसुम-निकरम्, अत्युच्चतया तारागणकमिव शिखरप्रदेश-संलग्नम्, उद्वहद्भिः, पादपैः उपशोभिता, लतामण्डपैः विराजिता, सदा-सन्निहित-मृत्यु-भीषणा, शशोपगता, प्रनृत्तनील-कण्ठा, पल्लवारुणा, हरिणाध्यासिता, समद-गजघटा-परिपालिता, मृगपतिसेविता, निशाचर-परिगृहीता, प्रकटित-मधु-कोष-शता, प्रकीर्ण-विविधकुसुमा, कण्टकिता, कोकिल-कुल-प्रलापिनी, तमाल-नीला, कप्याक्रान्ता, वेत्र-लताशत-दुःसह-प्रवेशा, कीचक-शताकुला, मुनिजन-सेविता, पवित्रा विन्ध्याटवी नाम। तस्यां च सकल-भुवन-विख्यातं भगवतः महामुनेः अगस्त्यस्य भार्यया लोपामुद्रया स्वयमुपरचितालवालकैः करपुट-सलिल-संवर्द्धितैः, सुत-निर्विशेषैः पादपैः उपशोभितम्, बद्धवेणिकथा गोदावर्या परिगतम् आश्रमपदमासीत्। तस्य च अगस्त्याश्रमस्य नातिदूरे अगाधम्,

---

ने थोड़ी देर विचार करके आदरपूर्वक कहा—'राजन्, यह कहानी तो बहुत बड़ी है। यदि आपकी अभिलाषा है तो सुनिए—

पूर्व और पश्चिम के समुद्र तटों से मिली हुई, मध्यदेश के अलंकार और पृथ्वी की करधनी के समान पवित्र विन्ध्याटवी नाम की वनभूमि है, जो अत्यंत फूले श्वेत पुष्पों को धारण करनेवाले ऐसे वृक्षोंसे भरी हुई है जो अपनी ऊँचाईके कारण ऐसे लगते हैं मानो उनकी चोटियों पर तारे उगे हुए हों, जिसमें लताओं के बहुत से मंडप बने हुए हैं, जो सर्वदा मृत्यु का भय देनेवाली और खरगोशों से भरी हुई है, जिसमें मोर नाचते हैं, लाल-लाल पल्लवों से जो लाल दिखाई पड़ती है, जिसमें स्थान-स्थान पर मृग बैठे रहते हैं, मद से मतवाले हाथी जिसकी रक्षा करते रहते हैं, जिसमें सिंह भी पाये जाते हैं, जो राक्षसों से भरी हुई है, जिसमें सैकड़ों मधु के छत्ते दिखाई पड़ते हैं, जिसमें नाना प्रकार के फूल बिखरे रहते हैं, जो काँटों से भरी हुई है, जिसमें कोकिल बोलते रहते हैं, जो नीले तमाल के वृक्षों से भरी हुई है, जिसमें बन्दर भरे हुए हैं, जिसमें बेंत की लताओं के कारण प्रवेश करना कठिन है, जो सैकड़ों बाँस के वृक्षों से उलझी हुई है तथा जहाँ मुनियों के निवास बने हुए हैं। उसी वनभूमि में संपूर्ण लोकों में विख्यात महामुनि भगवान् अगस्त्य का आश्रम है, जो उनकी पत्नी भगवती लोपामुद्रा के हाथों से बनाये गए थालोंवाले तथा उनके ही हाथों से जल देकर बढ़ाए हुए बच्चों के समान वृक्षों से सुशोभित है, जिसके पास ही धारा रूपी वेणी बाँधे

अनन्तम्, अप्रतिमम्, अपां निधानं पम्पाभिधानं पद्मसरः। तस्य प्ररसः पश्चिमे तीरे दण्डकारण्यस्य अधिपतिः इव, सर्ववनस्पतीनां नायकः इव, विन्ध्यस्य सखा इव, महान् जीर्णः शाल्मलीतरुः। तस्यैव शाल्मलीतरोः एकस्मिन् जीर्णकोटरे जायया सह निवसतः पश्चिमे वयसि वर्त्तमानस्य कथमपि पितुः अहं विधि-वशात् सूनुः अभवम्। ममैवं जायमानस्य प्रसववेदनया जननी परलोकमगमत्! अतिपरिणतवयाश्च स्फुटाग्रकोटिना चञ्चुपुटेन नीडपतिताभ्यः शालिवटीभ्यः तण्डुलकणान् आदाय वृक्ष मूल-पतितानि च शुककुलावदलितानि फल-शकलानि समाहृत्य परिभ्रमितुमशक्तो मह्यमदात्। प्रतिदिवसमात्मना च परिभुक्तम् अशेषम् अकरोद् अशनम्।

---

## अपुत्रस्य विषादः

(कादम्बरीतः)

विरत वचनायां तस्यां भूपालः तूष्णीं मुहूर्तमिव स्थित्वा दीर्घम्

---

गोदावरी नदी बहती है। उस आश्रम के समीप ही अगाध, अनन्त, अनुपमेय, जल का खजाना पंपा नामवाला कमलों से भरा हुआ तालाब है। उस तालाब के पश्चिम किनारे पर, दंडकारण्य के स्वामी के समान, संपूर्ण वनस्पतियोंके नायक के समान और विन्ध्याचल के मित्र के समान एक बहुत पुराना सेमल का पेड़ है। उसी सेमल के पेड़ के एक पुराने घोंसले में अपनी पत्नी के साथ मेरे पिता निवास करते थे। मैं उनकी बुढ़ौती में भगवान् की कृपा से एक मात्र पुत्र रूप में पैदा हुआ। मुझे पैदा करते हुए प्रसवपीड़ा के कारण मेरी मां मर गई। अत्यन्त बुढ्ढे हो जाने के कारण चलने फिरने में अशक्त मेरे पिता अपनी फटो हुई चोंच द्वारा दूसरे घोंसलों से गिरी हुई धान की बालों से चावल के कणों को लाकर तथा सुग्गों से कुतरे जाकर वृक्ष के नीचे गिरे हुए फल के टुकड़ों को इकट्ठा करके देते थे और प्रतिदिन मेरे खाने से बचे हुए पदार्थों को स्वयं खा लेते थे।

### पुत्ररहित का शोक

उसके चुप हो जाने पर राजा ने थोड़ी देर चुप रह कर एक लम्बा उछ्वास लेते हुए कहा—देवि, जो वस्तु भगवान् के अधीन है उसके विषय में किया ही

उष्णञ्च निःश्वस्य निजगाद—'देवि ! किमत्र क्रियतां दैवायत्ते वस्तुनि ? अतिमात्रम् अलं रुदितेन । न वयम् अनुग्राह्याः प्रायः देवतानाम् । आत्मजपरिष्वङ्ग-सुखस्य नूनम् अभाजनम् अस्माकं हृदयम् । अन्यस्मिन् जन्मनि न कृतम् अवदातम् कर्म । जन्मान्तरकृतं हि कर्म फलमुपनयति पुरुषस्य, इह जन्मनि । न हि शक्यं दैवम् अन्यथाकर्तुम् अभियुक्तेनापि ।

यावत्तु मानुष्यके शक्यम् उपपादयितुं तावत् सर्वम् उपपाद्यताम् । अधिकां कुरु देवि ! गुरुषु भक्तिम् । द्विगुणाम् उपपादय देवतासु पूजाम् । ऋषि-जन-परिचर्यासु दर्शितादरा भव । परं हि दैवतं ऋषयः यत्नेन आराधिताः अतिदुर्लभानामपि वराणां दातारो भवन्ति । श्रूयते हि पुरा चण्डकौशिक-प्रभावाद् बृहद्रथो नाम राजा जरासन्धं नाम तनयं लेभे । दशरथश्च राजा ऋष्यशृङ्गस्य प्रसादाद् अवाप चतुरः पुत्रान् । अमोघफला हि महामुनिसेवा भवति ।

'मां दहति अहर्निशम् अनपत्यता समुद्भवः शोकः । शून्यमिव मे प्रतिभाति जगत् । अफलमिव पश्यामि राज्यम् । अप्रतिविधेये तु

---

क्या जा सकता है । अतः इतना अधिक रोना व्यर्थ है । हम लोग देवताओं के कृपापात्र नहीं हैं । हम लोगों का हृदय पुत्र के आलिंगन-सुख का अधिकारी नहीं है । हमने पूर्वजन्म में पुण्य कर्म नहीं किया है । पुरुष का पहले जन्म में किया हुआ कर्म ही इस जन्म में फल के पास पहुंचाता है । महायोगी भी भाग्य को बदलने में समर्थ नहीं हो सकता ।

हाँ, इस मनुष्य-लोक में जो कुछ भी अपने किए हो सके वह सब करना चाहिए । देवि, अब और अधिक गुरुभक्ति करो, देवताओं की पूजा पहले की अपेक्षा दूनी कर दो, ऋषियों की सेवा में सम्मान प्रदर्शन करो । ऋषि लोग श्रेष्ठ देवता हैं जो यत्नपूर्वक आराधना करने पर अत्यन्त दुर्लभ वरों को भी दे देते हैं । सुना जाता है कि प्राचीन काल में बृहद्रथ नाम के राजा ने महर्षि विश्वामित्र के प्रभाव से जरासन्ध नामवाले पुत्र को प्राप्त किया था और राजा दशरथ ने भी महर्षि शृङ्गी की कृपा से चार पुत्र पाये थे । महान् मुनियों की सेवा निश्चित फलदायिनी होती है ।

मुझे भी पुत्र न होने का शोक रात-दिन जलाता है । सारा संसार मुझे शून्य-सा और राज्य निष्फल-सा लगता है किंतु भाग्य की प्रतिकूलता के विपरीत मैं कर ही

विधातरि किं करोमि ? तन्मुच्यतां देवि ! शोकानुबन्धः । आधीयतां धैर्ये धर्मे च धीः ।'

इति अभिधाय, सलिलमादाय स्वयं करतलेन साश्रुलेखम् आननमस्याः ममार्ज । पुनः पुनश्च प्रियशत–मधुराभिः वाग्भिः आश्वास्य सुचिरं स्थित्वा नरेन्द्रो निर्जगाम । निर्गते च तस्मिन् विलासवती दिवसव्यापारमन्वतिष्ठत् । ततः प्रभृति सुतरां देवताराधनेषु, ब्राह्मणपूजासु, गुरुजनपरिचर्यासु च आदरवती बभूव । सिद्धायतनानि सिषेवे । अश्वत्थप्रभृतीन् वनस्पतीन् ववन्दे । अनवरतवाच्यमानाः पुण्यकथाः शुश्राव ।

गच्छति च काले कदाचित् राजा स्वप्ने विशालवत्याः आनने प्रविशन्तं शशिनमद्राक्षीत् । प्रबुद्धश्च शुकनासाय तं स्वप्नमकथयत् । स तं प्रत्युवाच—'अद्य खलु मया निशि स्वप्ने धौत-धवलवाससा शान्तमूर्तिना दिव्याकृतिना द्विजेन विकचं चन्द्रकलावदानदलशतं पुण्डरीकमुत्सङ्गे देव्याः मनोरमायाः निहितं दृष्टम् । आवेदयन्ति हि प्रत्यासन्नम् आनन्दम् अग्रजातानि शुभानि निमित्तानि । किञ्च अन्यद् आनन्दकरण-

---

क्या सकता हूँ । इसलिए हे देवि, इस शोक का परित्याग करो और अपनी बुद्धि को धैर्य तथा धर्म में स्थिर करो ।'

ऐसा कहकर पानी लेकर स्वयं राजा ने उसके आँसू से भरे हुए मुख को धोया और बार-बार सैकड़ों प्रिय बातों से उसे सान्त्वना देकर बड़ी देर तक बैठ कर बाहर चले गए । उनके चले जाने पर विलासवती दैनिक कार्यों में लग गई । उसी समय से वह देवताओं की आराधना, ब्राह्मणों की पूजा और गुरुजनों की सेवा में विशेष सम्मान-भाव रखने लगी । वह सिद्ध पीठों की सेवा करती, पीपल आदि वृक्षों को नमस्कार करती और निरन्तर कही जाने वाली पवित्र कथाओं को सुनती थी ।

कुछ दिन बीतने पर एक दिन राजा ने स्वप्न ने विलासवती के मुख में प्रवेश करते हुए चन्द्रमा को देखा । जागने पर राजा ने उस सपने को शुकनास से कहा । शुकनास ने राजा से कहा–'आज मैंने रात को स्वप्न में श्वेतवस्त्रधारी अत्यंत शांत देवता जैसे ब्राह्मण को फूले हुए चन्द्रकला जैसी सौ पंखड़ियोंवाले श्वेत कमल को देवी मनोरमा की गोद में रखते हुए देखा है । पहले ही दिखाई देने वाले शुभ लक्षण निकट आनेवाले आनन्द की सूचना देते है । इसके अतिरिक्त और कौन

मतो भविष्यति? अवितथ-फला हि प्रायः निशावसान-समय-दृष्टाः भवन्ति स्वप्नाः। सर्वथा न चिरेणैव मान्धातारमिव धौरेयं राजर्षीणां भुवनानन्द-हेतुमात्मजं जनयिष्यति देवी।' इत्थमेवमभिदधानमेव तं करेण गृहीत्वा नरेन्द्रः प्रविश्य अन्तःपुरम् उभाभ्यां ताभ्यां स्वप्नाभ्यां विलासवतीमानन्दयाञ्चकार।

---

## मातङ्ग-चरितम्

( महाकविः दण्डी )

( ई०–६०० )

अयं गद्यांशः दण्डिनः दशकुमारचरितात् समुद्धृतः। अत्र राजवाहनेन पृष्ठः मातङ्गः आत्मनः चरितं परिचयं च कथयति। ]

राजवाहनः मङ्गल-सूचकं शुभ-शकुनं विलोकयन् देशं कञ्चित् अतिक्रम्य विन्ध्याटवी-मध्यम् अविशत्। अत्र हेति-हति-किणाङ्कं, कालायस-कर्कश-कायं, यज्ञोपवीतेन अनुमेयविप्रभावं, व्यक्त-किरात-प्रभावं, लोचन-पुरुषं ददर्श।

---

आनन्द हो सकता है रात्रि के अन्त में दिखाई देनेवाले स्वप्न निश्चित फलदायी होते हैं। थोड़े ही समय में देवी निश्चित ही राजर्षियों में श्रेष्ठ मान्धाता के समान पृथ्वी को आनन्दित करनेवाले पुत्र को जन्म देंगी। इस प्रकार कहते हुए शुकनास का हाथ पकड़ कर राजा उसे भीतर ले गये और उन दोनों स्वप्नों से महारानी विलासवती को आनन्दित कर दिया।

---

### मातंग की कथा

राजवाहन मंगलसूचक शुभ शकुनों को देखता हुआ कई देशों को पार करके विन्ध्याटवी में प्रविष्ट हुआ। जहाँ उसने काले लोहे के समान कठोर शरीर वाले किसी पुरुष को देखा जिसके शरीर पर शस्त्रों के घावों के निशान थे, जो यज्ञोपवीत धारण करने के कारण ब्राह्मण प्रतीत हो रहा था; किन्तु देखने में किरात जैसा कठोर नेत्रवाला था।

तेन विहित-पूजनः राजवाहनः अभाषत—'ननु मानव ! जन-सङ्ग-रहिते, मृग-हिते, घोर-प्रचारे, कान्तारे विन्ध्याटवीमध्ये भवानेकाकी किमिति निवसति ? भवद्-अंसोपनीतं यज्ञोपवीतं भूसुर-भावं द्योतयति। हेति-हतिभिः किरात-रीतिः अनुमीयते, कथय किमेतत् ?' इति।

'तेजोमयः अयं मानुष-गात्र-पौरुषः नूनं न भवति' इति मत्वा स पुरुषः तद्वयस्य-मुखात् नाम-जनने विज्ञाय तस्मै निज-वृत्तान्तमकथयत्—'राजनन्दन, केचिदस्याम् अटव्याम् वेदादि-विद्याभ्यासमपहाय-निज-कुलाचारं दूरीकृत्य, सत्य-शौचादि-धर्म व्रातं परिहृत्य किल्विषमन्विष्यन्तः पुलिन्द-पुरोगमाः तदन्नमुपभुञ्जानाः बहवः ब्राह्मणब्रुवाः निवसन्ति। तेषु कस्यचित् पुत्रः, निन्दा-पात्र-चरित्रः, मातंगो नामाहम् सह किरात-बलेन जनपदं प्रविश्य ग्रामेषु धनिनः स्त्री-बाल- सहितान् आनीय-अटव्यां बन्धने निधाय तेषां सकल-धनम् अपहरत् उद्धृत्य वीतदयः व्यचरत्।

---

उससे संस्कृत होकर राजवाहन ने कहा—'मनुष्य, तुम मनुष्यरहित, मृगों के लायक, कठिनाई से प्रवेश योग्य इस घने विन्ध्य वन में अकेले क्यों रहते हो ? तुम्हारे कन्धों पर पड़ा जनेऊ तुम्हारे ब्राह्मणत्व को प्रकट कर रहा है किंतु घावों के चिन्हों द्वारा किरातों की रीति का अनुमान हो रहा है। बताओ यह क्या है ?'

'यह तेजस्वी पुरुष साधारण मनुष्य मात्र नहीं है'—ऐसा समझ कर उस पुरुष ने उसके ( राजवाहन के ) मित्र के मुख से उसका नाम तथा कहानी जानकर उसे अपनी कहानी-सुनानी प्रारम्भ की—'राजपुत्र, इस विन्ध्य वन में कई ब्राह्मण कहे जानेवाले ऐसे लोग रहते हैं—जिन्होंने वेदादि विद्याओं का पढ़ना तथा अपने कुल का आचरण और सत्य शौच-आदि धर्मानुष्ठानों को छोड़ कर पापों के पीछे चलने वाले पुलिन्दों की गुलामी स्वीकार कर ली है और जो उन्हीं का दिया अन्न भी खाते हैं। उन्हीं में से एक का पुत्र; निन्दनीय चरित्र वाला मैं मातंग नाम का ब्राह्मण हूँ। मैं किरातों की सेना के साथ गाँवों में जाकर धनियों को स्त्री-बच्चे-सहित लाकर बन्दी बना देता था और उनका सारा धन छीन लेता था। इसी प्रकार निर्दय होकर घूमा करता था।

